# श्रीपराशरभट्टार्यैः प्रणीतस्य
# श्रीरङ्गराजस्तवस्य समीक्षणम्
## (द्वितीयो भागः)


रचयिता

साहित्यशिरोमणिः, शिक्षाशास्त्री

Dr. मरिङ्गमणि तिरुमडिशै आळ्वार M.A. Ph. D.

संस्कृतोपन्यासकः,

A.P.R. Jr. College, Nagarjunasagar

Guntur Dt., A.P.



श्रीभक्तिसारप्रकाशनम्

नागार्जुनसागर

2000

श्रीपराशरभट्टार्यैः प्रणीतस्य श्रीरङ्गराजस्तवस्य समीक्षणम्
प्रथममुद्रणम् - १०००
1000 copies
Price : Rs. 150

This Book is published with the Financial Assistance of Tirumala Tirupati Devasthanams, under their scheme "Aid to the Authors for Religious books."

Published by :
**Dr. M.T. ALWAR, M.A.; Ph. D.**
Jr. Lecturer, A.P.R. Jr. College,
NAGARJUNASAGAR
Guntur Dt., A.P.
Ph : 08642 - 78296

Typesetting :
SUDARSAN GRAPHICS
TIRUPATI. Ph: 39701

Printed at Jayakrishna Graphics, Vijayawada.





श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः ।
श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

# विषयसूचिका

षष्ठः महाप्राकारः

श्रीमते रामानुजाय नमः ।

## ।। पञ्चममहाप्राकारः ।।

### पञ्चममहाप्राकारस्य भूमिका ।

श्रीमतो वेङ्कटनाथस्य अव्याजकृपाबलात् तत्र भवताम् आचार्याणां वात्सल्यविशेषात् भगवतः श्रीरङ्गनाथस्य विषये श्रीपराशरभट्टार्यैः विरचितस्य श्रीरङ्गराजस्तवस्य अध्ययनकाले क्रमशः पञ्चममहाप्राकारे प्रविशामः।

पञ्चमप्राकारः विशिष्टगुणमयः भवति। राजाधिराजः श्रीरङ्गराजः प्राकारेऽस्मिन् मांसचक्षुषामपि स्वकल्याणगुणैः दिव्याभरणैः दिव्यपरिजनपरिचारकादिपरमैकान्तिभिः संसेव्यमानपादारविन्दः आपादचूडमनुभवितुं शेषशयने दिव्यमङ्गळविग्रहेण स्वदिव्यमहिषीभिः दर्शनलाभमनुगृह्णाति।

पञ्चमप्राकारप्रवेशः साक्षात् श्रीवैकुण्ठप्रवेश एव। यथा श्रीमति वैकुण्ठे श्रीमन्नारायणः वेदवेद्यः नित्यमुक्तसूरिबृन्दैः "अहमन्नमहमन्नमहमन्नम् अहमन्नादोऽहमन्नादः" इति सदा पश्यद्भिः सूरिभिश्चानन्तगरुडविष्वक्सेनादिभिः संसेव्यमानचरणारविन्दः भवति। एवमेव प्रत्यक्षे परमेपदे श्रीरङ्गे भगवान् रमाजानिः विराजमानो भवति। महाप्राकारेऽस्मिन् श्रीरङ्गराजस्तवपूर्वशतकः परामृश्यते। श्रीरङ्गराजस्तवस्तावत् शतकद्वयविशिष्टः भवति। श्रीपराशरभट्टार्याः भगवद्रामानुजाचार्याणामाज्ञाम् अनुवर्तन्ते स्म। अतः द्वयमर्थानुसन्धानेनैव यावच्छरीरपातं श्रीरङ्गे सुखमधिवसन्तः इमं श्रीरङ्गराजस्तवमहाप्रबन्धं द्वयार्थप्रतिपादकं भगवते समर्पितवन्तः। भगवत्सम्बन्धः आचार्यमुखेनैव प्राप्यत इति कृत्वा श्रीमन्तः पराशराः "आचार्यविषयीकारात् प्राप्नुवन्ति परां गतिम्" इति श्रीपाञ्चरात्रप्रामाणानुसारेण गुरुपरम्परावन्दनपूर्वकं मङ्गळमारभन्ते। श्रीमच्छब्दं विवृण्वन्तः श्रीमन्नारायणशब्दार्थं कावेरीवर्णनं भागवतमहिमानं श्रीरङ्गदिव्यनगरवर्णनं द्वारपालादीनां वर्णनं , चन्द्रपुष्करिणीपुन्नागवृक्षादीनां प्राशस्त्यं श्रीमन्तं विष्वक्सेनं

तत्पत्नीः वेदात्मानं गरुडभगवन्तं, तत्पत्नीः, पञ्चायुधान्, हनुमविभीषणौ, वेत्रश्रेष्ठं, विमानान्तःप्रदेशं, पादारविन्दसंवाहिनीः, चामरग्राहिणीः वर्णयन्तः स्तुवन्तः अस्माकं नयनयोः चित्रार्पितारम्भमिव दूरदर्शनीमाध्यमेन यथा आधुनिककाले भूतमपि वृत्तान्तं पश्यामः तद्वत् विशिष्टमार्गेण प्रदर्शयन्ति। मन्त्ररत्ननिष्ठनारपदविवरणं कृत्वा नारायणपदार्थभूतं श्रीरङ्गराजं विस्तरेण स्तुत्या प्रतिपादयन्तः तच्चरणौ शरणं प्रपद्ये इति प्रतिपाद्यं पूर्वखण्डार्थं परिसमापयन्ति पूर्वशतकेन। श्रीरङ्गनाथं तस्य दिव्यावयवसमुदायं श्रीरङ्गराजमुपायतया अनुसन्धानाय तदीयपादारविन्दयोः निरन्तरपरिचर्यैव उपेयमिति सिद्धान्तं स्थापयन्ति। एवमेव नागराजशायिनं श्रीरङ्गराजं तदीयसौशील्य-वात्सल्यकारुण्यलावण्यसौन्दर्यसौकुमार्यादिमुखेन मौळ्यादिपादमूलान्तं प्रणमन्ति।

ततश्च समाश्रयणसौकर्यापादकत्वेन समाश्रयणकार्या-पादकत्वेन च पूर्वाचार्यैर्विभक्ताः कृपापरिपाकभेदाः सौशील्यवात्सल्य-सौलभ्यप्रभृतयो ज्ञानशक्त्यादयश्च श्रीरङ्गशायिनि विशदतरं प्रकाशन्त इति साम्प्रदायिकानां पन्थानं निरूपयन्ति। तत्रैवशरणं प्रपद्य इति समग्रं वैष्णवतत्त्वं प्रकाशयामासुः। द्वयमन्त्रस्य पूर्वखण्डविवरणं पूर्वशतके यथातथं प्रपञ्चितवन्तः। तच्च तथैवात्र प्राकारे पश्यामः। तत्र दिव्यदृष्टिं भगवानेवानुगृह्णातु, "भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप।।" इति भगवद्गीतावचनं न कदापि विस्मरणीयं भवति। अतः "भवतु मम परस्मिन् शेमुषी भक्तिरूपा" इति श्रीभाष्यकारमङ्गळश्लोकमेव शरणं व्रजामि । पञ्चमप्राकारनिर्माणानुज्ञां देहीति तमेव श्रीनिवासं याचे।।

## ।। श्रीरङ्गराजस्तवे पूर्वशतकपरामर्शः ।।

आचार्यमहिमा -

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः।
श्रीवत्साङ्कसुतश्श्रीमान् श्रेयसे मेऽस्तु भूयसे।।

अखिलाण्डकोडिब्रह्माण्डनायकस्य श्रीमन्नारायणस्य विभूतिद्वयमावैकुण्ठात् चराचरमिदं जगत्। स एवान्तःशास्ता सर्वमिदं जगन्नियमयति। तस्यैव अपारकारुण्यात् महालक्ष्म्याः चैतन्यंस्तन्यलाभात् जीवानां सर्वेषां च करणकळेबरादिकमुपलब्धम्। सर्वत्रापि जीववर्गेषु ज्ञानवतां मानावानां प्राशस्त्यं नितरां सुप्रसिद्धम्। "दुर्लभो मानुषो देहः" इति दुर्लभत्वेनोक्ते वस्तुतः तादृशे च मनुष्ययोनौ यदजायामहि तदिदं सुमहद्भाग्यम्। जगति ख्यातयशसां शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदां निसर्गादेवाच्युतचरणकमलैकान्तमनसां श्रीमन्नाथयामुनयतिवरलोकाचार्यवेदान्ताचार्यवरवरमुनीन्द्रादिसदाचार्यदैवतकसत्सम्प्रदायसौरभसमृद्धेऽन्वये समुदपद्यामहीति यत्तदिदं सत्यं सर्वेषामपि भाग्यानामुपरि विराजते। दुरत्यया भगवतः माया भवति। तां मायां भागवता एव तरन्तीति इति गीतायां श्रीहरिः उपादिशत् खलु। एवमेव जयाख्यसंहितोक्तप्रकारेण

'साक्षात् नारायणो देवः कृत्वा मर्त्यमयीं तनुम्।
मग्नानुद्धरते लोकान् कारुण्यात् शास्त्रपाणिना।।
.................................................
तस्मात् भक्तिः गुरौ कार्या संसारभयभीरुणा।।"

भगवानेव स्वनिर्हेतुककृपया गुरुरूपेण शास्त्रपाणिनावतीर्य सर्वानुद्धरत इत्यत्र नास्ति संशयः।

सात्त्विकद्वयप्रसङ्गे —
गुरुरेव परं ब्रह्म गुरुरेव परा गतिः
गुरुरेव परा विद्या गुरुरेव परं धनम्।

गुरुरेव परः कामो गुरुरेव परायणम्
यस्मात्तदुपदेष्टासौ तस्माद्गुरुतरो गुरुः।।
अर्चनीयश्च वन्द्यश्च कीर्तनीयश्च सर्वधा
ध्यायेज्जपेन्नमेद्भक्त्या भजेदभ्यर्चयेन्मुदा।
इति सर्वेषु वेदेषु सर्वशास्त्रेषु सम्मतं
एवं द्वयोपदेष्टारं भावयेत् बुद्धिमान् धिया।।
(ज्ञानसारम् -३१)

इत्यादिषु स्थलेषु द्वयोपदेष्टारं सद्गुरुं प्राप्य तेनानुगृहीतदिव्यमन्त्रः दिव्यजीवनः भगवत्सायुज्यं पुमान् गमिष्यतीति स्पष्टं ज्ञायते। अतः उत्तमज्ञानलाभाय चेतनोऽयं -

"स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं
तस्मै स विद्वानुपपन्नाय सम्यक् प्रशान्तचित्ताय शामान्विताय
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।।"

इति श्रुतिप्रतिपादितमुखेनैव परमात्मानुभवैकनिष्ठः शिष्यः वैराग्यभावेन सदाचार्यं समाश्रयेदिति ज्ञायते। तदनु शिष्यः

शरीरं वसु विज्ञानं वासः कर्म गुणानसून्।
गुर्वर्थं धारयेद्यस्तु स शिष्यो नेतरः स्मृतः।।
सद्बुद्धिस्साधुसेवी समुचितचरितः तत्त्वबोधाभिलाषी
शुश्रूषुः त्यक्तमानः प्रणिपतनपरः प्रश्नकालप्रतीक्षः।
शान्तो दान्तोऽनसूयुः शरणमुपगतः शास्त्रविश्वासशाली
शिष्यः प्राप्तः परीक्षां कृतविदभिमतः तत्त्वतः शिक्षणीयः।।

इत्यादिश्रुतिप्रतिपादितलक्षणविशिष्टाय शिष्याय गुरुः हितमुपदिशत्येव। आचार्यप्रसादेन मम सर्वमिदम् अभीप्सितं प्राप्स्यतीति विश्वासः यस्यास्ति स सुखी भवेदेव। अत एव पुराणसमुच्चये मूलमन्त्रमहात्म्ये "देवताया गुरोश्चैव मन्त्रस्यैव प्रसादतः। ऐहिकामुष्मिका सिद्धिः द्विजस्यास्ति न संशयः।। इत्यत्र देवतागुरुमन्त्रप्रभावो निगदितः। ब्रह्माण्डपुराणे-

विष्णोरर्चावतारेषु लोहभावं करोति यः।

यो गुरौ मानुषं भावमुभौ नरकपातिनौ।।
अर्चाविष्णोः शिलाधीः गुरूषु नरमतिः वैष्णवे जातिबुद्धिः
विष्णोर्वा वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिः।
सिद्धे तन्मन्त्रे सकलकलुषहे शब्दसामान्यबुद्धिः
श्रीशे सर्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी सः।।
(ज्ञानसारम्-३२)

पुराणसमुच्चये आचार्यमाहात्म्यप्रकरणे -

चक्षुर्गम्यं गुरुं त्यक्त्वा शास्त्रगम्यन्तु यस्स्मरेत्
करस्थमुदकं त्यक्त्वा घनस्थमभिवाञ्छति।
सुलभं स्वगुरुं त्यक्त्वा दुर्लभं यो उपासते
त्यक्त्वा धनं मूढो गुप्तमन्वेक्षति क्ष्मतौ।।
येनैव गुरुणा यस्य न्यासविद्या प्रदीयते।
तस्य वैकुण्ठदुग्धाब्धिद्वारकास्सर्व एव सः।।

इत्यादिस्थलेषु प्राचीनग्रन्थेषु न्यासविद्याप्रदातारं गुरुम् अध्येतारं शिष्यं प्रति लक्षणं स्पष्टं ज्ञायते। अतः श्रीवैष्णवसम्प्रदाये गुरुशिष्ययोः सम्बन्धः न्यासविद्यामुखेन (द्वयमन्त्रप्रदानेनैव) सिध्यति। न पुनः डु-कृञ्करणादिशास्त्रप्रदानेन। मन्त्ररत्नपदं द्वयमन्त्रे योगरूढं भवति। तत्र सर्वमन्त्रश्रेष्ठत्वं योगार्थः। श्रीमन्नारायणेत्याद्यानुपूर्वीविशेषो रूढ्यर्थः। योगरूढिश्च

"सर्वेषामेव मन्त्राणां मन्त्ररत्नं द्वयाह्वयम्।
मन्त्ररत्नं द्वयं न्यासः प्रपत्तिः शरणागतिः।।
नामानि मन्त्ररत्नस्य पर्यायेण निबोध मे।'

इति पराशराय भगवान् नारदः ब्रवीति। अतः यत्रोपायोपेयत्वेन द्वयमन्त्रः प्रदीयते सैव परम्परा गुरुपरम्परेति कीर्त्यते। सत्सम्प्रदाय-गुरुपरम्पराविषये तत्र भवन्तः श्रीपराशरभट्टपादाः स्वकीये प्रबन्धे श्रीरङ्गराजस्तवे गुरुपरम्परामेवंप्रकारेण प्रणमन्ति।

"श्रीवत्साङ्कगुरोस्सुतः श्रुतिशिरोयुग्मैकनिर्वाहकैः।
शिष्यैः ख्यापिततत्त्ववित्त्वविभवो लक्ष्म्या कटाक्षोऽक्षिकः।।

श्रीरङ्गराजस्तवस्य समीक्षणम्

श्रीरङ्गेशपुरोहितः शतकयोर्द्वय्या द्वयाख्यं मनुम्।
व्याचिख्यासुरसङ्ग्रहं समतनोत् श्रीरङ्गराजस्तवम्।।

इति श्रीरङ्गराजस्तवव्याख्यानावसरे व्याख्यातारः शतकद्वयमिमं ग्रन्थं द्वयमन्त्रविवरणरूपेण प्रतिपादितवन्तः। एवमेव श्रीपराशरभट्टार्याः कृत्स्नत्रय्यन्तसारार्थबृन्दसन्ततं मन्त्ररत्नखण्डद्वयमेव शतकद्वयेन व्यावृण्वाना तत्र गुरुपरम्परावन्दनपूर्वकमेव सर्वैस्साम्प्रदायिकैरभ्यसनीयत्वात् द्वयस्य प्रत्यूहव्याहृत्ये मङ्गळस्य अनुष्ठेयत्वात् जन्मना विद्यया च स्वजनकश्रीवत्साङ्कमिश्रवन्दनरूपं मङ्गळं निबध्नन्ति। प्रायशः श्रीवैष्णवसम्प्रदाये गुरुपरम्परावाक्यानि त्रयोदश नित्यानुसन्धेयानि भवन्ति। तानि च श्रीवैष्णगुरुपरम्परावाक्यानि -

१. अस्मद्गुरुभ्यो नमः।
२. अस्मद्परमगुरुभ्यो नमः।
३. अस्मत्सर्वगुरुभ्यो नमः।
४. श्रीमते रामानुजाय नमः।
५. श्री पराङ्कुशदासाय नमः।
६. श्रीमद्यामुनमुनये नमः।
७. श्रीराममिश्राय नमः।
८. श्री पुण्डरीकाक्षाय नमः।
९. श्रीमन्नाथमुनये नमः।
१०. श्रीमते शठकोपाय नमः।
११. श्रीमते विष्वक्सेनाय नमः।
१२. श्रियै नमः।
१३. श्रीधराय नमः।

इत्येतत्पर्यन्तमनुसन्धानं कुर्वन्ति। श्रीपराशरभट्टार्याणां पितृपादाः गुरुपरम्पराविषये प्रत्येकं श्लोकमनुगृहीताः।

"लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्।।

इति गुरुपरम्परामारोहक्रमानुसारेण अवरोहणानुक्रमेण .च स्तुवन्ति। सम्प्रदायग्रन्थाध्ययनकाले संस्कृतद्रविडसम्प्रदायेऽपि अयमेव श्लोकः अनुसन्धीयते। आचार्याः "नेरे आचार्यनेन्बतु संसारनिवर्तमान पेरिय तिरुमन्त्रत्तै युपदेशित्तवनै" इत्यस्मिन् श्रीवचनभूषणमहाग्रन्थसूत्रे ३२४ श्रीमदष्टाक्षरप्रद एव सद्गुरिति

संसारवर्धकङ्गुळुमाय् क्षुद्रङ्गळुमान भगवन्मन्त्रङ्गळै
उपदेशित्तवरगळुक्कु आचार्यपूर्ति इल्लै ।। ३२५ ।।

इत्यस्मिन् सूत्रे वरवरमुनिचन्द्रमाः स्वव्याख्यानावसरे भगवन्मत्रोपदेष्टारः सर्वेऽपि आचार्याः न भवेयुरिति क्षुद्रफलसिद्धिप्रयोजनपराणां मन्त्राणामुपदेष्टारः न कदापि योग्या इति ते च मन्त्राः संसारवर्धका भूत्वा अर्थकामपुत्रविद्यादिक्षुद्रफलपर्यन्ताः अशान्तिमेवोत्पादयन्तीति जगदुः। तत्रैव गुरुशिष्यवृत्तिशोधने तृतीयप्रकरणे-

'मन्त्रमुम् देवतैयुम् फलमुम् फलानुबन्धिकळुम् फलसाधनमुम् ऐहिकभोगमुम् एल्लाम् आचार्यने येन्नु निनेक्ककडवन्।।" (३२२सूत्रम्) इत्यस्मिन् सूत्रे शिष्यलक्षणमपि अनुगृहीतवन्तः - यथां तत्र शिष्याणां स्वाचार्य एव समस्तविधमन्त्रदेवताफलफलानुबन्धिफलसाधनैहिकभोगभाग्याः भवन्तीति, ते च शाश्वतं भगवच्चरणारविन्दधाम सर्वोत्तमपुरुषार्थं प्रसादयन्तीति निश्चित्य तेषां सर्वकैङ्कर्यं कुर्युरिति विवृण्वन्ति।

**पराशरभट्टार्यैः कृतः स्वपितृपादनां श्रीकूरेशमिश्राणां स्तवः -**

अतः श्रीपराशराः सर्वजनोज्जीवनभूतां गुरुपरम्परां स्वकीये श्रीरङ्गराजस्तवे कीर्तयन्तः सर्वप्रथमं स्वपितरं "पितृदेवो भव" इति श्रुत्यनुगुणं परदेवताबुध्या प्रणमन्ति। "मङ्गळादीनि मङ्गळमध्यनि मङ्गळान्तानि च शास्त्राणि प्रथन्ते" इति स्वपितृपादानां गुणगणकीर्तनमेव स्वप्रबन्धस्य मङ्गळमिति मङ्गळाचरणं कुर्वन्ति।

"श्रीवत्सचिन्हमिश्रेभ्यो नमउक्तिमधीमहि।
यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गळसूत्रताम्।।

श्रीपराशरार्याणां पितृपादाः श्रीकूरेशमिश्राः सर्वलोकमान्याः स्वचक्षुर्हान्यापि स्वदिव्यचक्षुर्भूतभगवतः परत्वं सर्वलोकसाक्षिकं सुदृढं शपथितवन्तः स्वपितर इति तेषु महानादरः भक्तिश्च। श्रीवत्साङ्कमिश्रश्रीसूक्तीनां भर्त्रा भगवता चिरवियोगितानां त्रयीदेवीनां पुनः सङ्घटकत्वानुभवः। सकललोकमङ्गळमूलभूतायास्त्रय्या मङ्गळत्वविधायिन्यस्ताः सूक्तयः इति भावयन्तः ग्रन्थारम्भे "श्रीवत्स" शब्दं समर्पयन्ति। श्रीशब्दः श्रीवत्सशब्दश्च परममाङ्गलिकौ भवतः। श्रियःपतिः इति माघे श्रियःकुरूणां इति किरातार्जुनीये श्रीवत्सलक्ष्म गळशोभिकौस्तुभं इति भागवते पश्यामः। श्रीवत्सालङ्कृतवक्षस्त्वादनपायिनी श्रीः। यत्र श्रीवत्सस्तत्र लक्ष्मीः। चिन्हशब्देन नाम्न्यपि मङ्गळचिह्नमस्तीति द्योतते। श्रीवत्सचिह्नमिश्राः मिश्रयितारः पुरोहिताः। त्रयीब्रह्ममिश्रयितारः मिश्राः पुरोहितवंश्यानां सर्वं मङ्गळसूत्रत्वेन भासते। श्रीरङ्गराजपुरोहितानां जामाता रङ्गराज एव भवेत् । उक्तीनां सूत्रत्वं उच्यते। तेन च वक्तुः पितुः सूत्रकृत्वमुक्तं भवत्येव। ब्रह्मसूत्रमित्यत्र ब्रह्मशब्दस्यावृत्त्या तस्य वेदपरत्वं परब्रह्मपरत्वं लभ्यते। तेन च शब्दब्रह्मणो ब्रह्मपरत्वेन निर्णायकानि सूत्राणि ब्रह्मसूत्राणि भवन्ति। त्रयीब्रह्म ब्रह्मणा मङ्गळसूत्रेण संयोज्यते परिणीयत इति ब्रह्मसूत्राणि पितृसूक्तयः। ब्रह्सूत्रत्वमस्तु वा मा वा। मङ्गळसूत्रत्वमस्त्येव। मङ्गळसूत्रकारो मत्पिता। वेदान्तवाक्यकुसुमग्रथनार्थकानि सूत्राणि ब्रह्मसूत्राणीति श्रीशङ्कराचार्याणां भावः। "प्रभूतोपनिषदमृतोदन्वत्सारभूतामृतमथनसाधनानि सूत्राणीति वेदान्ताचार्यपादानामाशयः। शब्दब्रह्मणस्त्रय्याः परब्रह्मणा विवाहमङ्गळनिवर्तकानि मङ्गळतन्तवो ब्रह्मसूत्राणीति श्रीपराशराणामाशयः । सूचनात् सूत्रमिति यौगिकार्थाश्रयणादपि रूढतन्त्वर्थमवलम्ब्यार्थवर्णनेऽर्थसन्निकर्षाधिक्यं स्वारस्यरूपफलाधिक्यं चेति त्रयाणामप्याशयः। मत्पित्रा घटकेन पुरोहितेन तदुक्तिमङ्गळसूत्रैरलौकिक्या त्रयीवध्वा संयुक्तं जामातारं श्रीरङ्गराजमनुभवामीत्यत्र तात्पर्यवर्णनेन श्रीरङ्गराजस्तवेऽस्यान्तर्भावः। जामातृबुद्ध्या वयं पश्येम श्रुतिपतिम्।

'सत्यां श्रुतौ च बधिरास्त्वयि तन्महिम्ना....." इति भगवत्परत्व-प्रतिपादिकासु श्रुतिषु सतीष्वपि श्रुतिरहितत्वरूपबाधिर्यमुह्यते कैश्चिदिति श्रीवैकुण्ठस्तवे सत्यामपि श्रुतौ श्रवणेन्द्रिये बधिरास्त इति चारु प्रदर्श्यते।

मङ्गळश्लोकरचनायां श्रीभट्टपादानामाशयस्तु श्रीमत्पितृ-दैवतानां श्रीवत्साङ्कमिश्राणां प्रबन्धाः त्रयीकण्ठे मङ्गळसूत्रतां यान्ति। पतिसत्तासूचकं स्त्रीणां कण्ठाभरणं सूत्रं मङ्गळसूत्रं भवति। श्रीमन्नारायणैकासक्तहृदयतया श्रिय इव पतिव्रतायास्त्रय्य एव स्त्रियः। श्रीवत्सचिह्नमिश्रप्रबन्धाभावे पतिसत्तैव न सूच्यत इत्यर्थः।

आज्ञा तवात्र भवती विदिता त्रयी सा।
तां हि प्रमाणमुपजग्मुरतीन्द्रियार्थे।।

इत्यादिना त्रय्या हृदयङ्गमः पतिः श्रीमन्नारायण एवेति श्रीवत्सचिह्नमिश्राः प्रत्यपादयन्। "मार्गदर्शी महर्षिः" इति वचनानुगुणं श्रीपराशरभट्टार्याः स्वकीये श्रीरङ्गराजस्तवे नानावृत्तश्लोकभङ्ग्या प्रवृत्ते गुरुपरम्परावशात् भाष्यकारसकाशाच्च लब्धं विशेषार्थञ्च दर्शयन्ति। एवमेव दिव्यप्रबन्धसिद्धमप्यर्थं तत्र तत्र दीपयन्तः परमतं च निराकरिष्यन्तः श्रीभट्टारकाः सर्वस्यापि श्रेयसो गुरुमूलतया भगवत्स्तुतेरपि तदीयस्तुतेरङ्गतया च गुरुपरम्परां स्तुवन्ति। तत्रादौ स्वपितृचणानां वन्दनं युक्ततममेव। यतो हि ते भगवतः श्रीभाष्यकारस्य विशिष्टाद्वैतसिद्धान्तं चिदचिद्विशिष्टात्मकब्रह्मतत्त्वं स्वपञ्चस्तवैः प्रबन्धैरनुगृहीतवन्तः। पितृदेवानां मार्गानुसरणं भट्टपादा अपि स्वग्रन्थे भगवतः स्वरूपरूपगुणविभूतिं कल्याणगुणगणकीर्तनं द्वयमन्त्रविवरणं वेदपुराणेतिहासस्मृतिप्रमाणानुसारं स्थापयितुकामाः "अधीमहे" इति त्रय्युच्चारणे प्रयोगः तेन चोच्चारणेन गुरूच्चारणा-नूच्चारणेन गुरूच्चारणानूच्चारणप्रयुक्ताध्ययनशब्दस्योपपत्तिसमर्थनमिति भाव्यम्। मातापितृसहस्रेभ्योऽपि वत्सलतराया हृदयगुहान्धकारनिरोधिन्यास्त्रय्या गुरुत्वमस्त्येव। इत्थं स्वश्रीरङ्गराजस्तवस्य शतकद्वयविभूषितस्य मङ्गळश्लोकमाचरयन्तः सकलविघ्नध्वंसनं मङ्गळमार्गप्रदर्शनञ्चानु-

गृहीतवन्तः। श्रीमन्तः कूरेशमिश्राः भक्तिज्ञानवैराग्यनिधयः आसन्। भगवद्रामानुजसमकालीनाः निरुपमानपाण्डित्येन व्याकरणविद्या-कुशलाश्चासन्। श्रीकाञ्चीपुरस्य दिव्यक्षेत्रस्य नातिदूरे योजनमित एव विराजमाने "कूर" क्षेत्रे सञ्जाताः। अस्य कूरक्षेत्रस्य विषये काचन दन्तकथा श्रूयते। तत्रस्थाः ग्रामजनाः श्रीवैष्णवाः एवं वदन्ति। पुरा क्रूरः कश्चन राक्षसः काञ्चीपुरस्य नातिदूरस्थेऽस्मिन् ग्रामेऽतिष्ठत्। स तु सर्वान् भक्षति स्म। सर्वे जनाः भीताः सञ्जाताः। तस्मिन् समये महाभक्ताग्रगण्याः श्रीवत्सचिह्नमिश्राः तस्मिन् ग्रामे ध्यानादिकमकुर्वन्। एतेषां प्रभावेण सः दनुजः पलायितः। ततः प्रभृति तस्य दनुजनाम्ना कूरग्रामः प्रसिद्धिं गतः। परन्तु कालक्रमेण कूरग्रामः कूरम् इति पदेन व्यवह्रियते। श्रीवत्साङ्कमिश्राः एव ग्रामाधिपतयः सञ्जाताः। अतः एतेषां नाम कूरेशाः इति कूरनाथ इति लोके प्रसिद्धिमुपगतम्। श्रीकूरग्रामः धनधान्यसम्पदा नितरां राराजते स्म। श्रीकूरेशाः अपि भाग्यशालिनः धनिनः आसन्। श्रीविद्याभ्यां कटाक्षिताः एते कालक्रमेण भगवद्रामानुजाचार्याणां प्रियशिष्याः सञ्जाताः। एतेषां साहाय्येन श्रीभाष्यरचनां रामानुजाचार्याः कृतवन्तः इति ऐतिह्यं सर्वान् गुञ्जति। एकसन्धाग्राहिणः एते काश्मीरदेशस्थबोधायनवृत्तिग्रन्थसम्पादने भाष्य-काराणां रामानुजयतीश्वराणां महान्तं साहाय्यमकुर्वन्। भगवद्रामानुजा-चार्याणामुपद्रवकाले स्वयं काषायशाटीं धृत्वा तानरक्षयन्। श्रीवैष्णवसिद्धान्तस्थापनाय स्वनेत्रेऽप्युन्मूल्य दर्शनरक्षणमकुर्वन्। यमकरत्नाकरं नाम महाकाव्यमपि निर्मितवन्तः। पञ्चस्तवनिर्मातारः एते श्रीवैष्णवसम्प्रदायेऽनितरं स्थानं भजन्ते। श्रीरङ्गेशपुरोहिताश्चासन्। एतेषां पुत्रप्रवराः श्रीपराशरभट्टार्याः श्रीरङ्गनाथदिव्यप्रसादेन लब्धजन्मानः श्रीरङ्गेशपुरोहिताः भूत्वा श्रीवैष्णवदर्शने प्राधान्यमभजन्। अत एव श्रीरङ्गराजस्तवारम्भवेलायां प्रथमं स्वपितृपादानामेतेषां वन्दनं नितरां शोभते।

**स्वाचार्याणां गोविन्दमिश्राणां स्तवः -**

तदनु श्रीपराशरभट्टार्याः स्वस्मै पञ्चसंस्कारमन्त्ररत्नोपदेशिकं-गोविन्दमिश्रवन्दनमाचरितुकामाः अस्मद्गुरुभ्यो नमः इति गुरुपरम्परा-वाक्यानुसारमेव तान् प्रणमन्ति।

'रामानुजपदच्छाया गोविन्दाह्वानपायिनी।
तदायत्तस्वरूपा सा जीयान्मद्विश्रमस्थली।।'

श्रीमति मळलमङ्गळे ग्रामे कमलनयनपेरियपिराट्टियार्दम्पत्योः क्रोधनवत्सरे पुष्यमासे पूर्णिमायामिन्दुवासरे पुनर्वसुनक्षत्रे सञ्जातस्य दिव्यशिशोः श्रीशैलपूर्णार्याः गोविन्दमिश्र इति नाम प्रददुः। भुजयोः शङ्खचक्रलाञ्छनमपि ददुः। तदनु कालक्रमेणाधीतवेदवेदन्तादिशास्त्राः नितरां शोभन्ते स्म। तस्मिन्नेव समये तत्र भवन्तः श्रीमद्रामानुजाचार्याः श्रीमति काञ्चीपुरे यादवप्रकाशस्याद्वैतगुरोस्समीपे वेदान्ताध्ययनं कुर्वते स्म। तैस्साकं भागिनेयोऽयं गोविन्दमिश्रा अपि तत्रैवाद्वैतगुरोस्समीपे सतीर्थ्यत्वेन नियुक्तास्सन्तः वेदान्तशास्त्रमधीयते स्म। गच्छति काले श्रीकाळहस्तीश्वरकृपया उळ्ळङ्गैकोंदनाय्नार् इति द्रामिड्यां नाम स्वीचक्रुः। तन्महामन्दिरस्य सर्वकार्यनिर्वाहकोऽभूत्। तदनु (तिरुमल-नम्बि) श्रीशैलपूर्णार्याः स्वभागिनेयः एवं बाह्यकुदृष्टिमतावलम्बी भूत्वा स्वधर्मं श्रीवैष्णवाचारञ्च तत्याजेति विदितवृत्तान्ताः बहुधा अखिद्यन्त। स्वयमेव श्रीकाळहस्तिं गत्वा तान् गोविन्दमिश्रान् यामुनमुनेः स्तोत्ररत्नस्य "कः श्रीः श्रियः परमसत्त्वसमाश्रयः कः" इति श्लोकेन,[1] श्रीशठकोपवाक्सुधामहिम्ना च शैवसाङ्गत्यदोषविधुरानकुर्वन्। गोविन्द-मिश्रा अपि श्रीशैलपूर्णश्रीपादसम्बन्धिनो भूत्वा श्रीवेङ्कटाचले श्रीश्रीनिवासस्य सकलविधकैङ्कर्यं कुर्वते स्म। भगवद्रामानुजाचार्याणां कृपाविशेषादन्तरङ्गकैङ्कर्यसौभाग्यमप्यलभन्। एतत्सर्वं स्वाचार्य-

---

1 "तेवुमेप्पोरुळुम्बडक्कै पूविल्नान्मुगनैप्पडैत्तं तेवनेम्बुरुमानुक्कल्लाल् पूवुम्पूशनैयुम् तगुमे।।" (तिरुवाय्मोळि २-२-४) यो वा "सकलजगतां सृष्टिकर्तारं स्वनाभिकमले उत्पादयामास तं श्रीहरिं विना को वार्हति पुष्पाणि दिव्यार्चनं च?" न कोऽप्यर्हतीति भावः।

महिमानं मनसि निधाय स्वचार्यास्य यतिपतिपादेन परिणयः बहुचमत्कारेण कुर्वन्ति। एते रामानुजपदसम्बन्धेन समिध्यमानविभवा इति रामनुजपदाधः परमशीतलां छायां प्राप्तवन्त इति नाममात्रमस्त्यस्य यतिपतेः पृथग्भूतम्। व्यक्तिस्तु तदन्या तच्छायैव। चेतना सप्राणेयं छाया। न छाया सामान्यस्य छायिनाम्नः पृथङ्नाम भवेत्। रामानुजपदानुगतेयं छाया। न कदाचिदपि तत्पदविश्लेषो यथा नित्यं तस्याच्युत-पादाम्बुजाविश्लेषः। एतच्छायापाये मम विश्रामापायो भवेदिति नितान्तं तप्येय इति स्तुवन्ति। शास्त्रसिद्धं भगवदायत्तस्वरूप-मप्यविगणय्याचार्यपदायत्तस्वरूपतानुसम्बन्धीयते। सा च छाया जीयादिति मङ्गळाशासनमाशीर्लिङ्गानुष्ठिताः। आचार्यपदच्छायायां धीसन्तापशान्तिसम्भवः गोविन्दाह्वा जीयादिति सा किं न सेव्यते? इति वासुदेवतरुच्छाया विषये प्रयुक्तं सा इति शब्दमेवास्मदाचार्यविषये प्रयुञ्ज्महे इति स्तुवन्ति स्म।

गोविन्दमिश्राः महाभागवताग्रगण्याः श्रीपराशरशिशोरुदयकाले एव श्रीरामानुजार्यदिव्याज्ञया श्रीकूरेशकुलोद्भवकं कुमारं हस्ताभ्यामा-दाय वक्षसाऽश्लिष्य दृष्टिदोषपरिहाराय व्याधिनिवारणाय च द्वयमन्त्रमनुसन्दधाना मङ्गळान्याशंसमानाश्च श्रीभाष्यकारेभ्योऽदर्शयन्। रामानुजाचार्याः तस्य शिशोः असाधारणं तेजः वीक्ष्य गोविन्दमिश्र दिव्यद्वयमन्त्रसौरभं दिशोऽशनुते किमकार्षीः इत्यपृच्छन्। ते च रक्षायै द्वयमन्त्रमनुसन्दधदेवाऽर्भकमानैषमिति प्रत्यूचुः। तदनु कृपामात्र-प्रसन्नाचार्याः श्रीरामानुजाचार्याः हे गोविन्द रक्षारूपे कर्तव्यांशेऽत्र त्वमेव जागरूकोऽभवः। उज्जीवनकृत्येऽपि भवानेव श्रद्धामादत्तामितिआज्ञापया-मासुः। आचार्यश्रीहस्तलाभात् श्रीपराशराः गोविन्दभक्ताग्रगण्यः गोविन्दचरणारविन्दचञ्चरीकाः समभवन्। श्रीपराशरभट्टार्याणां पञ्चसंस्कारमन्त्ररत्नोपदेशका एते गोविन्दार्याः निस्समाभ्यधिक-तेजोविशेषा इत्यत्र को वा सन्देहः। अत एव स्वकीये श्रीरङ्गराजस्तवे स्वाचार्यभूतश्रीवत्साङ्कगोविन्दमिश्रयोः वन्दनं सश्रद्धं विहितवन्तः।

**श्रीमद्रामानुजाचार्याणां स्तवः -**

श्रीवत्साङ्कगोविन्दमिश्रयोः स्तवानन्तरं गुरुपरम्परायां विराजमानं "श्रीमते रामानुजाय नमः" इति वाक्यमनुसरन्तः भगवद्रामानुजमुनिं प्रणमन्ति। यतो हि भगवद्रामानुजाचार्याः उभयविभूतिनायकाः आचार्यपरम्परायां नायकमणय इव विराजन्ते। गुरुपरम्परायां भगवद्रामानुजाचार्याणां तिरुमुडितिरुवडिसम्बन्धेन नाम शिरसः सम्बन्धेन पूर्वाचार्याः पादयोः सम्बन्धेनार्वाचीनाचार्याः नितरां शोभन्त इति सम्प्रदायः।

श्रीरामानुजाचार्याः श्रीवैष्णवसम्प्रदायस्य महोपकारमकुर्वन्। अत एव श्रीवैष्णवदर्शनं रामानुजदर्शनमिति नाम्ना ख्यातिमविन्दत। श्रीवैष्णवसम्प्रदाये रामानुजार्याणां स्थानंमद्वितीयं निरुपहतं च । प्रपन्नजनाः "श्रीमते रामानुजाय नमः" इति सर्वत्र भगवन्नामवत् लिखन्ति। भगवतः सम्बन्धादपि रामानुजसम्बन्ध एव नः श्रेयानिति श्रीवैष्णवानां दृढाभिप्रायः। उभयविभूतिनायकः एते भगवतः कल्याणगुणान् प्रकाशयामासुः। सनातनं भागवतश्रीवैष्णवपरम्परां श्रीविष्णोः परमं तत्त्वम् अष्टाक्षरमहामन्त्रविवरणञ्च बहुविधं प्रचारयामासुः। श्रीपराशरभट्टार्याः स्वजीवनकाले भगवद्रामानुजाचार्याणां दिव्यमङ्गळविग्रहदर्शनं तेषां गोष्ठीसुखं चान्वभवन्। श्रीवैष्णवसम्प्रदायस्यास्य मूलकन्दायमानानां श्रीयामुनाचार्याणां मनोरथानुगुणं भाष्यकाराः श्रीकूरेशतनयेभ्यः श्रीपराशरभट्ट इति नामकरणं चक्रुः। अतः श्रीपराशरार्याणां श्रीरामानुजसम्बन्धः वाचामगोचरमेव। गुरुपरम्परायां रामानुजसम्बन्धः एंक एवालमिति रामानुजदास इति श्रीवैष्णवानां व्यवहारः लोके सर्वत्र दृश्यते। स्वपितुः स्वाचार्यस्य च रामानुजाचार्या एव साक्षांत् गुरवः भवन्ति। अत एव श्रीमन्तः पराशरभट्टार्याः-

रामानुजमुनिर्जीयात् यो हरेः भक्तियन्त्रितः।
कलिकोलाहलक्रीडामुधाग्रहमपाहरत्।।

इति तृतीयेन श्लोकेन स्तुवन्ति।। यः रामानुजमुनिः हरेः भक्तियन्त्रितात् कलिकोलाहलक्रीडामुधाग्रहं नाम निर्निबन्धनपिशाचम् अपहृतवानिति स्तुवन्तः भगवद्रामानुजाचार्याणां प्रभावमुपवर्णयन्ति। पूर्वोक्तश्लोके स्वाचार्यं रामानुजपदच्छायारूपेण वन्दनं कृत्वा छायानता । अधुना छायादायि वस्तु प्रणमन्ति। यतो हि -

"मदनमत्सरमानयः पुमान् बहुपिशाचगृहीत इवार्भकः।
निगमसिद्धनरेन्द्रदीक्षया निपुणपद्धतिमभ्यवपद्यते।।
(सङ्कल्पसूर्योदयः)

परेषां कोलाहलक्रीडया भगवान्मायया ग्रहीष्यते। तस्मात् मुधाग्रहान्मोक्ष्यते हरिः । मधुग्राहः मायाग्रहः-

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।। (भ.गी.)

इति यो भगवान् उपदिदेश स एव भगवान् मायया यन्त्रितः परैः स्वकोलाहलक्रीडया 'परं ब्रह्मैवाज्ञं भ्रमपरिगत'मिति परैरुच्यत इति शोष्यते वेदार्थसंग्रहारम्भे। मायाग्रहगृहीतं मायायन्त्रयन्त्रितं भक्तियन्त्रे आरोप्य मायायन्त्रादवरोपयन्ति श्रीभाष्यकाराः। मायायन्त्रितस्य भक्तियन्त्रारोपणेन मोचनम्। मायायन्त्रितः संसरतीति परे । भक्तियन्त्रितः भगवान् आत्मानमस्मांश्च बन्धान्मोचयति । यदि मोचक एव यन्त्रितः केऽस्मान् मोचयेरन्। यन्त्रान्तारारोपणेन तं ग्रहान्मोचयामः वशीकुर्मश्च। भक्तिरज्जुभिः तं बध्नीमः। ग्रहगृहीतान् यन्त्रविशेषे आरोप्य ग्रहान्मोचयेयुः सिद्धाः मान्त्रिकाः। भगवतः ग्रहान्मोचने तद्भक्तिरेव यन्त्रं भवति तेनैव तस्य रक्षा, नान्यस्य सामर्थ्यम्। अत्र श्रीपराशरभट्टपादाः भगवन्तं रामानुजाचार्यं मुनिशब्देन पूजयन्ति, मुनिरिति सिद्धनाम। 'सिद्धानां कपिलो मुनि'रिति भगवद्गीतायां विभूतियोगे भगवानुवाच। श्रीपराशरार्याः बाह्यकुदृष्टिमतनिरसनाय श्रीमद्रामानुजाचार्यैः विचारितान् ग्रन्थान् श्रीभाष्यादीन् अध्ययनं कृत्वा रामानुजसिद्धान्तस्थापनाय श्रीरङ्गे कैङ्कर्यनिर्वाहकाश्चासन्। अस्मिन् श्लोके जीयात् पदं वर्धतामभिवर्धतां जीयाज्जीयादिति तद्विषय-

मङ्गळाशासनं सूच्यते। द्रमिडभाषायां भगवत्सन्निधौ कैङ्कर्य-निर्वाहकाणां यतीश्वराणां जीयर् इति नाम्ना व्यवहारः दृश्यते। भगवद्रामानुजमुनयः हरेः आपदुद्धारकाऽभवन्-

कुदृष्टिकुहनामुखे निपतितः परब्रह्मणः।
करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः।। ३८ ।।

इति वेदान्ताचार्याः यतिराजसप्तत्यां स्तुवन्ति। एते श्रीपराशरार्यादपि अर्वाचीनाः भवन्ति। पराशरपदाकृष्टचेताः देशिकाः मुनिरिति तत्पदं तां च भावनां स्वीकृतवन्त इति वक्तुं शक्यते। श्रीवैष्णवदर्शनं तावत् श्रीरामानुजदर्शनमिति नाम्ना प्रसिद्धिमगमत् । तत्र कारणं महद्विद्यते। श्रीवैष्णवसम्प्रदायः रामानुजार्याणां न स्वकपोलकल्पितः । अनादि-कालादेव श्रीशठकोपनाथयामुनरक्षितः प्रवहति स्म। श्रीरामानुजाचार्यास्तु विशेषरूपेण प्रचारं चक्रिरे। अयं च विशेषः भगवान् श्रीरङ्गनाथ एव प्रोवाच। भगवतैव "श्रीरामानुजदर्शनम्" इति नाम व्यधायि।

एम्बेरुमानार् दर्शनमेन्रे इदुक्कु नम्बेरुमाळ्
पेरिट्टदु नाट्टिवैत्तारम्बुवियोर्।
इन्द दर्शनत्तै एम्बेरुमानार् वलर्त अन्दचेयलरिकैक्क ।।

(उपेशरत्नमाला-३४)

अतः श्रीपराशरार्याः स्वकीये श्रीरङ्गराजस्तवे मुनिरिति भगवन्तं रामानुजं प्रणमन्ति। अहो श्रीपराशरभट्टानां रामानुजपदभक्तिः।

**श्रीपराङ्कुशदासानां स्तवः (महापूर्णगुरोः स्तवः)**

अथ गुरुपरम्परायां "श्रीपराङ्कुशदासाय नमः" इति महापूर्णगुरोः दिव्यं नाम संकीर्तयन्ति। महापूर्णा अपि भगवद्रा-मानुजाचार्याणामप्याचार्याः। एतेषां प्रभावोऽपि निरुपम एव। श्रीमत्काञ्चीपुरे दिव्यक्षेत्रे काञ्चीपूर्ण इति (तिरुक्कच्चिनम्बि) महाभागवता आसन् । ते च भगवद्रामानुजार्याणां गुरुदेवताः। ते तु प्रत्यक्षेण भगवता श्रीकाञ्चीवरदराजस्वामिना सम्भाषन्ते स्म। रामानुजाचार्याः श्रीभाष्यारम्भकाले अनेन काञ्चीपूर्णमुखेन वरदराज-स्वामिने स्वमनसि स्थितसन्देहपरम्परां विज्ञापितवन्तः। रामानुजार्य-

परिप्रश्नान् श्रीकाञ्चीपूर्णमुखारविन्दात् भगवान् देवराजः स्वीकृत्य वाक्यषट्कं स्वयं यतिवराय रामानुजार्याय प्रेषयामास। तद्यथा-

"अहमेव परं तत्त्वं दर्शनं भेद एव च।
उपायेषु प्रपत्तिं च आन्तिमस्मरणवंर्जनम्।।
शरीरावसाने मोक्षं च पूर्णाचार्यं समाश्रय।

इत्यत्र महापूर्णगुरोः नाम भगवानेव सूचितवान्। अहो आश्चर्यं किल। महापूर्णगुरोः प्रभावः। अत एव श्रीपराशरभट्टर्याः तान् मनसा एव प्रणेमुः। तदाचार्यं यामुनमुनिं श्लोकमुखेन नमस्यन्ति।

**श्रीयामुनमहागुरोः स्तवः -**

अथ गुरुपरम्परायां "श्रीमद्यामुनमुनये नमः" इति यामुनमुनेः वन्दनं विधीयते। एते च यामुनाचार्याः महापूर्णगुरोः गुरवः। हेतुमात्रशरणतया स्वतःप्रमाणवैदिकसरणिदूषकवैशेषिकमृषावादिप्रभृति-क्षुद्रप्रतिन्धकान् स्वप्रबन्धैः निराकृत्य षाड्गुण्यपूर्णभगवद्भक्तिप्रवर्तकाः यामुनमुनय एव मदीयभक्तियोगविषयभूताः इति महता आदरेण स्तुवन्ति।

"विधाय वैदिकं मार्गमकौतस्कुतकण्टकम्।
नेतारं भगवद्भक्तेः यामुनम्मनवामंहे।।" ४ ।।

इति श्रीमद्गोविन्दपादाः रामानुजदयापात्रत्वात् वस्तुतामुपयाता इति पूर्वं जगदुः। किन्तु भगवन्तः श्रीभाष्यकाराः यामुनमुनिविषये

यत्पादाम्भोरुहध्यानविध्वस्ताशेषकल्मषः।
वस्तुतामुपयातोऽहं यामुनेयं नामाम्यहम्।।

इति यामुनाचार्यदयापात्रत्वात् वस्तुतामुपयातोऽहमिति वदतः श्रीरामानुजार्यान् प्रणमन्ति स्म। यामुनमुनेः दिव्यकटाक्षाः रामानुजार्ये बाल्ये एव स्वयमागताः। श्रीकाञ्चीदेवराजसन्निधौ रामानुजार्य-विद्याभ्यासमये यामुनार्याः द्वारादेव कटाक्षितवन्तः, स्वान्तिमदशायां रामानुजं द्रष्टुमभिलषिता अपि रामानुजमदृष्ट्वैव स्वाचार्यपद-मलञ्चक्रुः। रामानुजार्याः अपि तेषां दिव्यमङ्गळपार्थिवदेहे दक्षिणहस्ते अङ्गुळित्रयं बद्धमद्राक्षुः। यामुनाचार्याणामभिलाषात्रयमेव तत्र

निदानमिति तच्च त्रितयमभिलाषं श्रीभाष्यकरणं व्यसपराशरयोः कृतज्ञतानिवेदनं विशिष्टाद्वैतप्रचारादिकं करिष्यामीति प्रतिज्ञामकार्षुः। तत्प्रतिज्ञानुसारं श्रीभाष्यरचनां कृतवन्तः, श्रीविष्णुपुराणप्रपञ्चनात् भगवतः तत्त्वमाविष्कृतवते महोपकारकाय श्रीपराशरार्याय कृतज्ञतां प्रकटयितुकामाः श्रीकूरेशमिश्रनन्दनाय पराशरभट्टारक इति नाम निक्षिपुः । विशिष्टाद्वैततत्त्वं च प्रचारयामासुः । इत्थं श्रीभाष्यस्याविष्करणे श्रीव्यासपराशरयोरुज्जीवने विशिष्टाद्वैतप्रचारे श्रीयामुनार्या एव प्रधानतां भजन्ते । श्रीमन्तः महाप्रभावशालिनः यामुनार्याः सिद्धित्रय-आगमप्रामाण्य-गीतार्थसंग्रह-स्तोत्ररत्नादिग्रन्थनिर्माणकुशलाः श्रुतिसम्बन्धिनं पन्थानमकौतस्कुतकण्टकं विहितवन्तः। यथा

"श्रुतिन्यायापेतं जगति विततं मोहनमिदम्।
तमो येनापास्तं स हि विजयते यामुनमुनिः।।"
"कः श्रीः श्रियः परमसत्त्वसमाश्रयः कः
कः पुण्डरीकनयनः पुरुषोत्तमः कः।"
"कस्योदरे हरविरिञ्चमुखप्रपञ्चः
को रक्षतीममजनिष्ठ च कस्य नाभेः।।" (स्तोत्ररत्नम्)

इत्यादिभिः बहुभिः प्रतिप्रश्नैः तान् कौतस्कुतान् प्रश्नप्रियान् शमयन्ति स्म। आगमप्रामाण्येन भगवद्भक्तिजटिलसात्त्वतस्य रक्षणं कौतस्कुतशल्येभ्यः चक्रिरे। भक्तिभगीरथा एते बाह्यकुदृष्टिमार्गं निष्कण्टकी-कृत्य तां भक्तिप्रवाहिनीं निनायेति सविनयं प्रणमन्ति। अकण्टकीकृते वैदिकमार्गे भगवद्भक्तेः प्रवर्तितारं ध्यायामः इति श्रीपराशराः स्वभक्तिं प्रदर्शयन्ति। अहो श्रीपराशराणां भक्तिगरिमा।

**श्रीराममिश्र-पुण्डरीकाक्षयोः स्तवः -**

श्रीपराशरभट्टार्याः गुरुपरम्परास्तुतिविषये कञ्चन नियमं पालयन्ति। यथा ये च गुरवः ग्रन्थकर्तारश्च भवन्ति तान् वाचा श्लोकमुखेन प्रणमन्ति। अन्यान् गुरून् मनसा प्रणमन्ति। अतः श्रीरङ्गराजस्तवे सर्वेषां गुरुतल्लजानां कृते श्लोकाः न दृश्यन्ते। परम्परायामेषां श्लोकरूपा सत्क्रिया न दृश्यते तत्र मानसिकी

काप्यनिर्वचनीया सत्क्रिया विहितेति व्याख्यातारः विशदीकुर्वन्ति। अतः महापूर्णश्रीराममिश्रश्रीपुण्डरीकाक्षाणां प्रार्थनारूपश्लोका श्रीरङ्गराजस्तवे न प्रकाशन्ते। श्रीराममिश्राः श्रीपुण्डरीकाक्षदयापात्राः भवन्ति। मणक्काळ्नम्बि नाम महात्मा एतानेवंरीत्या स्तुवन्ति।

मासे मखायां सम्भूतं श्रीरामगुरुसत्तमम्।
पुण्डरीकाक्षपादाब्दचञ्चरीकमहं भजे।।

एवमेव

अयत्नतो यामुनमात्मदासमलर्कपत्रार्पणनिष्क्रियेण।
यः क्रीतवानस्थिरयौवराज्यं नमामि तं राममसेयसत्त्वम्।।

श्रीनाथमुनिकृपालाभात् योगविद्यादिरहस्याः श्रीपुण्डरीकाक्षपादाः अधिगतवन्तः। श्रीनाथमुनिशिष्याग्रगण्यस्य श्रीपुण्डरीकाक्षस्य श्रीपादद्वन्द्वपरिचर्यासौभाग्यविशेषात् श्रीराममिश्राः तत्त्वहितपुरुषार्थप्रतिपादनपरां वेदान्तविद्यामधिगतवन्तः। कालक्रमेण दर्शननिर्वाहकपदव्यां श्रीपुण्डरीकाक्षगुरोराज्ञया नियुक्ताः। अपरञ्च श्रीमन्नाथमुनिगुरुतल्लजानां पुत्रप्रवराः ईश्वरमुनयः महाभक्ताग्रगण्याः भवन्ति। तेषामचिरेण कश्चन शिशुरुदेष्यति, तस्मै "यमुनत्तुरवन्" यामुनः इति नामकरणं कुरु, स एवास्माकं श्रीवैष्णवसम्प्रदायस्य गुरुर्भविता इत्याज्ञापयामासुः। स्वगुरोर्वचनानुसारम् ईश्वरमुनीनां कश्चन शिशुः शुचौ मास्युत्तराषाढायां उदियाय। तस्मै शिशवे यामुन इति नाम स्वगुरोराज्ञया प्रदत्तवन्तः। स शिशुरेव यामुनमहादेशिको भूत्वा श्रीवैष्णवसम्प्रदाये आळवन्दार् इति नाम्ना सार्वभौमोऽभवत्।

श्रीराममिश्रसच्छिष्यं वन्दे तत्त्वार्थकोविदम्।
वादादवाप्तराज्यढ्यो विरक्तो यामुनोऽभवत्।।

इति श्रीपुण्डरीकाक्षश्रीराममिश्रकृतोपकारं मनसि भावयामासुः। पुण्डरीकाक्षानुग्रहात् श्रीराममिश्राः, श्रीराममिश्रानुग्रहात् श्रीयामुनाचार्याः उपलब्धाः । अतः तौ यामुनगुरू परमगुरुञ्च मनसा प्रणेमुः।

**श्रीनाथमुनीनां स्तवः -**

श्रीपराशरभट्टार्याः पूर्वाचार्यपरम्परायां भगवद्भक्तिप्रतिबन्धकप्रचुरेऽवसरे वैराग्यतत्त्वज्ञानपूर्वकाविच्छिन्नभक्तिप्रवर्तकं समधिगतद्रमिडोपनिषद्द्रष्टृशठकोपमुनिसाक्षात्कारमहालाभं श्रीमन्नाथमुनिं श्लोकरूपेण स्तुवन्ति। अयञ्चास्मिन् शतके पञ्चमश्लोकः-

नौमि नाथमुनिं नाम जीमूतं भक्त्यवग्रहे।
वैराग्यभगवत्तत्त्वज्ञानभक्त्यभिवर्षुकम्।।

श्रीमन्तः नाथमुनयः श्रीवैष्णवसम्प्रदाये शिखरायमाणाः विराजन्ते। एतान् प्रति

ज्येष्ठमासे त्वनोराधाजातं शठजिदाश्रयम्।
उद्धर्तारं प्रबन्धानां श्रीमन्नाथमुनिं भजे।। (तनियन्)

श्रीमन्तः यामुनाचार्याः स्वकीये स्तोत्ररत्नप्रारम्भवेलायां -

नमोऽचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये।
नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे।। (स्तोत्ररत्नम्)

इति स्तुवन्ति। श्रीवेदान्ताचार्या अपि "नाथेन मुनिना तेन भवेयं नाथवानहम्" इति स्तुवन्ति। नाथमुनयः एव द्रविडवेदानामुद्धर्तारः वीरनारायणपुरे सञ्जाताः। परभक्तिपरज्ञानपरमभक्तिघनाः सार्थकनामधेयाः यमनियमासनाद्यष्टाङ्गयोगसाक्षात्कृतहृत्पद्मसद्मदहरगगनरूपान्तरात्मावेदान्तवेद्यः भगवान् दिव्यदेशसञ्चाररकुशलायास्मै नाथमुनयेऽनुजग्राह। कदाचिद्दक्षिणद्वारकायां भगवन्तं श्रीकृष्णचन्द्रं सेवितुं श्रीवैष्णवभागवतावुभौ समागतौ। तावुभावपि श्रीकृष्णदिव्यचरणारविन्दं शरणं भजन्तौ बद्धेनाञ्जलिना नतेन शिरसा सरोमोद्गमैर्गात्रैः, गद्गदेन कण्ठेन "आरावमुदे" इति द्राविडगाथां विज्ञापयामासतुः। ताः गाथाः श्रुत्वा नाथयामुनः नितरां तृप्तिमधिजग्मुः। परन्तु श्रीशठारेः सहस्रगाथामयः तिरुवाय्मोळिनाम सः दिव्यप्रबन्धः लुप्तप्रायोऽभूदिति ज्ञात्वा नितरां दुःखमवापुः। श्रीशठकोपमहामुनेः जन्मस्थले श्रीमधुरकविदयाविशेषेण "कण्णिनुण् शिरुत्ताम्बु" नाम दिव्यप्रबन्धं द्वादशसहस्रवारं जपित्वा प्रपन्नजनकूटस्थं श्रीपराङ्कुशापरनामधारिणं

श्रीशठकोपमहामुनिं प्रत्यक्षीकृतवन्तः। नाथमुनेः प्रार्थनया स महायोगी चतुस्सहस्रमितं नालायिरदिव्यप्रबन्धं द्वादशसूरिमुखारविन्दगळितं एवमेव रहस्यत्रयम् अष्टाङ्गयोगरहस्यं कृपया अन्वग्रहीत्। ततः भगवतः तिरुवाय्मोळिमहाप्रबन्धानुसन्धानेन इहत्रफलमनुभूय तदनन्तरं परमपदं भजन्ते स्म।

भक्तामृतं विश्वजनानुमोदनं सर्वार्थदं श्रीशठकोपवाङ्मयम्।
सहस्रशाखोपनिषत्समागमं नमाम्यहं द्राविडवेदसागरम्।।

इति नाथमुनयः तं ग्रन्थमस्तुवन्। श्रीपराशरार्याः श्रीमत्पराङ्कुश-परकालादिकालानन्तरं भक्तिरसस्य ध्रुवमवग्रहो जात इति तस्मिन् समये वर्षुकवलाहकेनोपकारः एतैः विहित इति समाधिरसपूर्णोऽयं योगीति भक्तिधर्मवर्षुकोऽयं मेध इति उपावर्णयन्। भगवान् भक्त्यवग्रहे तृष्णार्तोऽभूत्। तदा भक्तिरसः तद्धारकः सञ्जातः। अत एव भगवद्गीतायां "तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" इति भगवानेव वदति। तत् सूचितवन्त इव श्रीपराशराः एते नाथमुनयः न केवलम् अस्माकं जीमूताः । भगवतो कालमेघस्यापि जीमूताः सञ्जाताः हरिं मुधाग्रहात् रामानुजमुनिः मुमोच इति नाथमुनयः अवग्रहात् ररक्षेति नाथोपज्ञं प्रवृत्तस्यास्मद्दर्शनस्यायमेव नाथमुनिः जीमूतः पोषक इति स्तुवन्ति। वैराग्यभगवत्तत्त्वज्ञानभक्त्यभिवर्षुकम् इत्यनेन वैराग्यं भक्तेः पूर्वभावितत्साधनं भवतीति प्रथमं भगवदितरवैराग्यं तार्तीयप्रथमपादेन द्वितीयपादैकदेशेन च प्रतिपाद्यते। भगवत्तत्त्वज्ञानं द्वितीयपादेन। भक्तिरूपविद्या च तृतीयपादेन तादृशः क्रमोऽत्र प्रदर्शितः।

**श्रीशठकोपमुनेः स्तवः -**

अथ नाथमुनेराचार्यमत्यङ्कुशस्वतन्त्र्यवैभवभगवदनुकम्पासम्पदा साक्षात्कृतद्राविडाम्नायं श्रीशठकोपमुनिं श्रीपराशरभट्टार्याः हर्षातिरेकेण स्तुवन्ति।

ऋषिं जुषामहे कृष्णतृष्णातत्त्वमिवोदितम्।
सहस्रशाखां योऽद्राक्षीत् द्रामिडीं ब्रह्मसंहिताम्।। ६ ।।

श्रीपराशरभट्टार्याः प्रतिश्लोकं प्रतिपदं साभिप्रायेण विलिखन्ति । प्रपन्नजनकूटस्थविषये किमु वक्तव्यम्, भक्त्यभिवर्षुकमित्युक्तं नाथमुनि-विषये । तच्च भक्तिरसघनदिव्यप्रबन्धवर्णनेन सिद्धम्। योगबलेन तल्लब्धधर्मवीर्यबलेन ददर्श द्रमिडवेदान्नाथमुनिः। श्रीशठकोपस्तु प्रथमं साक्षाद्द्रविडवेदं स्वयं ददर्श। तद्विशेषद्योतनाय ऋषिरिति प्रथम-विशेषणम्। यतो हि ऋषयो मन्त्रद्रष्टारः भवन्ति किल । श्रीपराशर-भट्टार्याणां पितृपादाः स्वकीये श्रीवैकुण्ठस्तवे श्रीशठकोपमुनिं "पराङ्कुशपयोधिः" इति वर्णयन्ति, यथा -

भक्तिप्रभावभवदद्भुतभावबन्धसंधुक्षितप्रणयसाररसौघपूर्णः ।
वेदार्थरत्ननिधिरच्युतदिव्यधामजीयात्पराङ्कुशपयोधिरसीमभूमा ।।३।।

यद्गोसहस्रमपहन्ति तमांसि पुंसां
नारायणो वसति यत्र सशङ्खचक्रः।
यन्मण्डलं श्रुतिगतं प्रणमन्ति विप्राः
तस्मै नमो वाकुलभूषणभास्कराय।।

वकुळाभरणं वन्दे जगदाभरणं मुनिम्।
यः श्रुतेरुत्तरं भागं चक्रे द्रमिडभाषया।।

इति नितरां कीर्तितवन्तः।

गङ्गा च यमुना चैव तथा गोदा सरस्वती।
नर्मदा सिन्धुकावेर्यौ ताम्रपर्णी सरिद्वरेति।।

इति प्रमाणेन सर्वनदीविलक्षणतयाऽभिहितायाः ताम्रपर्णीनद्यास्तीरे पुरैव ब्रह्मणा विनिर्मितायां भगवत्साक्षात्कारस्थानभूतायां श्रीनगर्यां महापुर्या-मनन्यप्रयोजनवैष्णवलक्ष्मीसम्पन्ने तुर्यकुले श्रीशठारिरयमवततार। महाभागवतकारिसमाह्वयभक्ताग्रेसरधर्मपत्न्यां पूर्णानाम्न्यां कुरङ्ग-नगरीपूर्णानुग्रहेण लोकाननुजिघृक्षुः भगवन्नियुक्तसैन्यनाथांशाधिष्ठितः कलियुगस्यादौ त्रिचत्वारिंशद्दिवसे प्रमादिवर्षवैशाखशुक्लपूर्णिमायां विशाखाशुक्रवासरसहितायां कर्काटकलग्ने रामदिवाकरवदच्युतभानु-वच्चायमवततार । पराङ्कुशार्यमुनिः श्रीशठकोपमुनीन्द्रः। आषोड-शाब्दमैन्द्रियकं ज्ञानमप्रकाशयन्तः मूकाभावमापन्नाः तैरव भगवदनुभव-

परस्सन्तुष्टभगवद्दत्तवकुळमालाविभूषितोर:स्थलस्सकलभक्ताग्रेसरपूज्यमानो प्रकाशन्ते स्म । तस्मिन् समये मधुरकविनामा महाभागवतः श्रीमदयोध्यायात्रामनुतिष्ठन् दक्षिणदिशि सूर्योदयतुल्यं किञ्चित्तेजः समीक्ष्य हठात् भ्रान्तो वनग्रामदहनादिकमाशङ्कमानः नेदं प्राकृतं तेजः किन्त्वप्राकृतमिति मन्वानः तत्कारणं च विज्ञातुं क्रमेण श्रीकुरुकापुरीमाश्रिताः तिन्त्रिणीमूलसंस्थितं कारिसूनं संसेव्यचैतन्यमस्यास्तिनवेति परीक्षितुकामो मधुरकविः हे मुने! अचिद्गर्भे सूक्ष्मवस्तु वसति चेत् किं भुक्त्वा कुत्र वसति इति कञ्चन प्रश्नं कृत्वा तदेव भुक्त्वा तत्रैव तिष्ठातीति तेन प्रत्युत्तरितः गुरुरयं सर्वज्ञो महाप्रभावस्सकललोकोज्जीवनायावतीर्णः वयमप्येनं गुरुवरमाश्रित्य समुज्जीवाम इति निश्चितमनाः तत्पादाम्बुजध्यानतन्नामकीर्तनपरस्तत्कैङ्कर्यमेव परमं प्रयोजनमिति मन्वानाः भगवद्गुणानुभवपरस्य तस्याग्रतस्तं परिपालयन् सान्तेवासिगणस्समुपास्त ।

श्रीशठकोपमुनयः परमपदवासिना श्रीशङ्खचक्रधारिणा सर्वकारणभूतेन सर्वनियन्त्रा सर्वस्वामिना सर्वान्तर्यामिणा वेदमयगरुडाधिरूढेण श्रीमन्नारायणेन स्वानुग्रहाय प्रत्यक्षीकृतदिव्यविग्रहेण सम्यगनुभावितततत्स्वरूपरूपगुणविभूतिचेष्ठिताः हृदयान्तरनिविष्टतदनुभवजनितापारप्रीत्यम्बुधिरनुभवपरीवाहरूपान् ऋग्यजुस्सामाख्यवेदत्रयसारार्थप्रतिपादकान् स्वयं च वेदभूतान् तिरुवित्तं, तिरुवाशरियं, तिरुवन्दादि नामकान् त्रीन् प्रबन्धान् प्रकटीकृत्य "वेदानां सामवेदोऽस्मि" इतिगीताचार्याभिमतसामवेदस्थानीयं श्रीवागुक्तिसमाह्वयं तिरुवाय्मोळिप्रबन्धमवतार्य तैरेतैरर्थपञ्चकविवरणैः प्रबन्धैर्मधुरकविप्रमुखसज्जनानुजीवयित्वा तदीयहृदयेषु तान् प्रबन्धान् सुप्रतिष्ठान् विधाय प्रत्युद्गतः नित्यसूरिभिः श्वेतद्वीपवासिभिश्च स्वीयमहादर्शनार्थमागतैस्संसेवितस्तेषां मङ्गलमाशास्य भगवदनुभवजनितप्रीतिबलगर्विततया उभयविभूत्योरपि मादृशो नान्योऽस्तीति प्रकटितवचनः सर्वज्ञेन भगवताप्यप्रमेयप्रभावभासुरो भगवन्तमेव धारकं पोषकं भोग्यं च मन्वानः सर्वशास्त्रतात्पर्यभूतमर्थपञ्चकं तदुपदेशकं रहस्यत्रयञ्च पूर्वोक्तदिव्यप्रबन्ध-

सूक्तिभिः विशदीकृत्य "दर्शनं परभक्तिस्स्यात् परज्ञानं तु सङ्गमः। पुनर्विश्लेषभीरुत्वं परमा भक्तिरुच्यते।।" इत्युक्तलक्षणंलक्षितपरभक्ति-परज्ञानपरमभक्तिपूर्णो लोकान् सर्वान् समुपजीव्य अर्चिरादिना पथा दिव्यं धाम जगाम। अस्यावतारकाल एवं कलिपुरुषः शठनामकासुर-रूपधारी तस्याग्रतोऽतिष्ठत् । तमेषज्ञानाग्निविलसितेन हूङ्कारेण भस्मसाच्चकार। ततोऽस्य शठकोप इति दिव्यनाम स्वपरसत्कृतं सुप्रसिद्धमभूत्। श्रीपराशरभट्टार्याः सर्वमपि महाप्रभावभूतमिदं वृत्तान्तं कृष्णतृष्णातत्त्वमिवस्थितं कलिकालदुर्विलासलुप्तपरतत्त्वज्ञानाशेष-जनरिरक्षिषास्वरूपमिवास्थितं लक्ष्मीपतेः स्वरक्षणाक्षमकृत्स्नजन-रक्षणाकाङ्क्षैव शठकोपमुनित्वेन अवातीर्ण इति संभावयन्ति। यद्वा कृष्णविषये या तृष्णाभक्तिरूपाप्राप्यत्वस्पृहासत्वमिव प्रादुर्भूतमिति साक्षात् भगवद्भक्तिस्वरूपमिति एतादृशमृषिं जुषामहेप्रीत्या सेवामहे इति प्रपन्नजनकूटस्थश्रीशठकोपाश्रयणावसरे आत्मनि बहुमानेन प्रथमं बहुवचनप्रयोगमकार्षुः। प्रायशः मन्त्रद्रष्टारो ऋषयो न नियमेन मन्त्रप्रतिपाद्यदेवतादौ तीव्ररागवन्तः भवन्ति। अयं तु ऋषी रागो मूर्तिमानिव। नेयं तृष्णा विषयमृगतृष्णिकावदतत्त्वभूता । नेयं तृष्णा गुणमात्रं, गुणी धर्मी तत्त्वमियं तृष्णा। तंदुदितमिति वदन्ति। एवमेव शठकोपमुनिः सहस्रशाखां संहितां ददर्शेति, अन्ये ऋषयः प्रायेण कर्मसंहितामद्राक्षुरिति, अयं ब्रह्मसंहितामद्राक्षीदिति सर्ववर्णार्हवेदमय-मपश्यदिति प्रशंसन्ति। वेदार्थनिर्णायकस्य सूत्रस्य आदिममस्मंद्भाष्यं द्रमिडभाष्यं भवति। अत एव श्रीवैष्णवसम्प्रदाये श्रीशठकोपमुनीन्द्राः भगवतः पादस्थानभूताः इति दिव्यसूरिषु नितान्तमुन्नतं स्थानं भजन्ते। श्रीवेदान्ताचार्याः यतिराजसप्ततौ-

यस्य सारस्वतं श्रोतो वकुळामोदवासितम्।
श्रुतीनां विश्रमायालं शठारिं तमुपास्महे।। ४ ।।

एते एव द्रमिडोपनिषत्तात्पर्यरत्नावळौ-

"सारः सारस्वतानां शठगुरुभणितिः शान्तिशुद्धान्तसीमा।"

इति, तत्रैव

भाषागीतिः प्रशस्ता भगवति वचनात् राजवच्चोपचारात्
सा चागस्त्यप्रसूता त्विति परिजग्रहे भूमिकाभेदयोग्या।
यत्तत्कृत्यं श्रुतीनां मुनिगणविहितैः सेतिहासैः पुराणैः
तत्रासौ सत्त्वसीम्नः शठमथनमुनेः संहिता सार्वभौमी।। ४ ।।

इति स्तुवन्ति। पादुकासहस्रेऽपि

वर्णस्तोमैर्वकुळसुमनो वासनामुद्वहन्ती
माम्नायानां प्रकृतिमपरां संहितां दृष्टवन्तम् ।
(प्रस्तावपद्धतिः, ३)

इति प्रणमन्ति। इत्थं श्रीशठकोपमुनिविषये श्रीवैष्णवाचार्या अत्यन्तं भक्तिभावमाविष्कुर्वन्ति। श्रीपराशरा अपि श्रीरङ्गराजस्तवे शठकोपमुनिवन्दनावसरे प्रतिपदं साभिप्रायमाविष्कुर्वन्तः तानस्तुवन्।

**विष्वक्सेनस्य स्तवः -**

श्रीशठकोपमुनेः दिव्यस्तवानन्तरं गुरुपरम्परायां श्रीविष्वक्सेनवन्दनं परिदृश्यते - "श्रीमते विष्वक्सेनाय नमः" इति। श्रीपराशरभट्टार्याः अत्र विष्वक्सेनाय मानसिकीवन्दनमेवाचरन्ति स्म। यतो हि भगवान् विष्वक्सेनः मन्त्ररत्नप्रकाशने आचार्याः भवन्ति। प्रथमतः श्रीमन्नारायाणः जगज्जनन्यै महालक्ष्म्यै मन्त्ररत्नं श्रीमदष्टाक्षरमनुजग्राह। सा च देवी सकलविबुधप्रौढसैन्याधिनाथाय तन्मन्त्रं कृपयाविष्चकार। तदनु श्रीमन्तः विष्वक्सेनः श्रीमते शठकोपमुनये उपादिशन्निति तदनु भूलोके प्रचारमाभूदिति कृत्वा आचार्यकोट्यां प्रविष्टवते श्रीमते विष्वक्सेनाय वन्दनमकार्षुः। श्रीपराशरार्यैः आगामिनि स्वकीये श्रीरङ्गराजस्तवे पूर्वशतके श्रीविष्वक्सेनस्य तत्पत्न्याः सूत्रवत्याः तस्य सेनापतीनां स्तवः ५०, ५१, ५२ श्लोकरचनाकाले रमणीयता विहितः। अत्र तु गुरुपरम्परायां स्थितत्वात् मानसिकवन्दनमकार्षुः।

**श्रियः स्तवः -**

श्रीपराशरभट्टार्याः गुरुपरम्पराप्रविष्टस्य विष्वक्सेनस्य वन्दनं मनसा कृत्वा भवभयाभितप्तानां तदुत्तारणाय श्रीमन्नारायणचरणारविन्दद्वन्द्वशरणागतिजुषां सर्वेषामापि पुरुषकारभूतां श्रियं नमस्यन्ति-

नमः श्रीरङ्गनायक्यै यद्भ्रूविभ्रमभेदतः।
ईशेशितव्यवैषम्यनिम्नोन्नतमिदं जगत्।। ७ ।।

चेतनाचेतनात्मकतया परिदृश्यमानं सकलजगदपि यस्याः श्रीरङ्गनायक्याः भ्रूविभ्रमस्य भ्रूविलासस्य उदञ्चनन्यञ्चनरूप-तारतम्यात् शेषशेषिव्यत्यासेन नाम रक्षकत्वरक्ष्यत्वरूपतारतम्येन नीच्चोच्चं भवतीति। अतः एतत्कारणभूतायै श्रीमत्यै पुरुषकाररूपिण्यै श्रीरङ्गनायक्यै नमः इति, वन्दनं बहुचमत्कारमाचरन्ति। अथ गुरुपरम्परायां "श्रियै नमः" इति वाक्यं विराजते। तदनुगुणं श्रियं नमस्यन्ति। श्रीमन्नारायणस्याभिमतानुरूपा सकलकल्याणगुणविशिष्टा मन्त्रोपदेशवेळायां चेतनाचेतनानां सर्वेषामपि आचार्यत्वं वहते। एषा तु अखिलजगन्माता। पुरुषकाररूपधर्मः अस्याः विशेषः असाधारणधर्मः अस्ति।

मत्प्राप्तिं प्रतिजन्तुनां संसारे पततामधः।
लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः।।
ममापि च मतं ह्येतत् नान्यथा लक्षणं भवेत्।
आकिञ्चन्यैकशरणाः केचिद्भाग्याधिकाः पुनः ।
मत्पादाम्भोरुहद्वन्द्वं प्रपद्य प्रीतिमानसाः।
लक्ष्मीं पुरुषकारेणा वृतन्वतो वरानन
मत्क्षमां प्राप्य सेनेश प्राप्यं प्रपकमेव माम्।।
लब्ध्वा कृतार्थाः प्राप्यन्ते मामेवानन्यमानसाः ।

इति श्रीवचनभूषणमहाप्रबन्धे श्रीपिळ्ळैलोकाचार्यानुगृहीते प्रथमे प्रकरणे षष्ठे सूत्रे पुरुषकारवैभवप्रसङ्गे श्रीमद्वरवरमुनीन्द्रैः स्वव्याख्यायां बहुधा प्रपञ्चितम्। 'श्रूणाति निखिलान् दोषान्, श्रीणाति च गुणैर्जगत्' इति श्रु-हिंसायां श्रीञ्-पाके इति धातुद्वयात् निष्पन्नोऽर्थः । श्रु-श्रवणे इति धातोः निष्पन्नः श्रीशब्दः शृणोति श्रावयति इति विशेषार्थञ्च ज्ञापयति। चेतनस्य कर्मपारतन्त्र्यं अनाद्यचित्सम्बन्धेन अविद्यानिर्मूलनम्। ईशश्वरस्य कर्मपारतन्त्र्यं निरङ्कुशस्वातन्त्र्यनिरन्तरकार्यरूप-स्वसङ्कल्पञ्च विरुध्य पुरुषकारमनुगृह्णात्येव।। "तत्क्षान्तिसम्वर्धिनीम्"

इत्यपि स्मरणीयं भवति। यथा तत्रैव श्रीवचनभूषणे "अरियात-वर्थङ्गळैयडैय अरिवित्तु, आचार्यकृत्यत्तैयुम् पुरुषकारकृत्यत्तैयुम्, उपायकृत्यत्तैयुम् ताने एरिट्टिकोळ्ळुगैयाले महाभारतत्तिल् उपायवैभवं शोल्लित्तायित्तु।।" इति व्याख्यातम्।[1]

अज्ञातज्ञापनमाचार्यकृत्यत्वात्, तत्त्वविवेकादारभ्य प्रपत्तिपर्यन्तं चेतनेभ्यः उपदिशतीति भगवते च चेतनविषये अङ्गीकाराय निर्वेदयतीति च विस्तरेण बहूदाहरणैः प्रपञ्चितम्। अतः श्रीवैष्णव-सम्प्रदाये महालक्ष्म्याः स्थानं आचार्यपरम्परायां प्रथमं वर्तते। अतः भगवद्रामानुजाचार्याः स्वशरणागतिगद्यरचनारम्भे "भगवन्नारायणाभि-मतानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासङ्ख्येय-कल्याणगुणगणां, पद्मवनालयां, भगवतीं श्रियं देवीं नित्यानपायिनीं निरवद्यां देवदेवदिव्यमहिषीम् अखिलजगन्मातरमस्मन्मातरमशरण्य-शरण्याम् अनन्यशरणः शरणमहं प्रपद्ये" इति शरणमुपांगमन्। मूलमन्त्राविर्भावसमये भगवान्नारायणः तन्मन्त्रं सर्वप्रथमतया महालक्ष्म्यै उपादिशत्। तदनु विष्ववक्सेनदिक्रमेण स्वाचार्यपर्यन्तं तन्मन्त्र उपलब्ध इति कृतज्ञतां प्रकटयन्ति। अत्र सङ्ग्रहेण -

"अस्मद्देशिकमस्मदीयपरमाचार्यानशेषान् गुरून्
श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णौ मुनिं यामुनम्।
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणं
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये।।

इति प्रतिदिनमाचार्यपरम्परां संस्मरामः। इत्थं पुरुषकारभूतां श्रियं प्रणम्य व्याख्येयतयाऽभिमतमन्त्ररत्नपूर्वखम्डं संङ्ग्रहेण विवृण्वन्तः श्रीमन्तः पराशरभट्टपादाः सेनेशं श्रियमिन्दिरासंहचरमिति क्रमानुगुणम् आ भगवत्तः प्रथितां गुरुपरम्परां समापयन्ति।

श्रीस्तनाभरणं तेजः श्रीरङ्गेशयमाश्रये।
चिन्तामणिमिवोद्वान्तमुत्सङ्गेऽनन्तभोगिनः।। इति।

---

[1] श्रीवचनभूषणम्, १ प्र. उपायवैभवम्, १४ सूत्रम्

"श्रीमन्नारायणचरणौ शरणं प्रपद्ये" इति द्वयमन्त्रे पूर्वखण्डः पदत्रय-विशिष्टः भवति । पदत्रयार्थः सङ्ग्रहेण अनुगृहीतवन्तः। अनन्तनाम्नो नागराजस्य पर्यङ्के उद्गीर्णं चिन्तामणिमिव स्थितं श्रीस्तनाभरणं श्रीरङ्गेशयमाश्रये इति प्रणमन्ति। अत्र श्रीस्तनाभरणं तेजः इत्यनेन श्रीमच्छब्दार्थः उक्तः। अनन्तरं नारायणशब्दार्थेषु अनन्तभोगिनः उत्सङ्गे उद्वान्तं चिन्तामणिमिव स्थितमित्यनेन शेषशायित्वरूप-स्वामित्वभोग्यत्वरूपे उपायोपेयत्वे चोक्ते । श्रीरङ्गेशयमित्यनेन वात्सल्यसौलभ्यसौशील्यदीन्युक्तानि आश्रयणस्य चरणयोरेवोचितत्वात् आश्रय इति पदेन चरणौ शरणं प्रपद्ये इति पदत्रयार्थोऽप्युक्तः इति मन्तव्यं भवति।

पञ्चमप्राकारे भगवतः सर्वाश्चर्यमयस्य दिव्यदर्शनं भविष्यति। तच्च भागवतपुरस्सरमेव भवति। अतः गुरुपरम्परामनुसन्धनं कुर्वन्तः

"त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्य-
भृत्यस्य भृत्य इति मां स्मर लोकनाथ"

इति श्रीकुलशेखरादीनां सूक्तिमनुसरन् भगवन्तं श्रीरङ्गराजं स्तोतुमारब्धाः इति अहो श्रीपराशरार्याणां गुरुभक्तिः। श्रीरंङ्गस्य प्रणवाभिन्नत्वं सूच्यते। तुष्टूषितस्य श्रीरङ्गराजस्यानुध्यानारम्भे प्रणवालम्बनत्वेन कवेरनुसन्धानम् ओङ्कारोपक्रमात् परममाङ्गळिकं भवति। अत्र प्रणवनिर्दिष्टास्त्रयोऽपि सह निर्दिश्यन्ते। श्रीविशिष्टं तेजः शेषोत्सङ्गे। एते प्रणवरूपरङ्गान्तः अत्र रङ्गे परस्य ब्रह्मणो रूपं शेषित्वं स्फुटमीक्ष्यते। श्लोकोऽयं श्रीपराशरभट्टार्याणां पितृपादैः श्रीकूरेशमिश्रैः विरचितं श्रीवैकुण्ठस्तवस्थश्लोकं ज्ञापयति। यथा

देव्या श्रिया सह वसन्तमनन्तभोगे।
भुञ्जीय साञ्जलिमसङ्कुचिताक्षिपक्ष्मा।। ७७ ।।

एवमेव श्रीयामुनदेशिकस्तोत्ररत्नस्थं श्लोकमपि ज्ञापयति यथा - "तया सहासीमनन्तभोगिनी"ति गुरुपरम्परायां स्थितं श्रीधराय नमः इति वाक्यमपि ज्ञापयन्तः सर्वेषां प्रथमाचार्यः भगवान् श्रीमन्नारायणः एवेति सम्प्रदायमर्थं श्रीस्तनाभरणतेजः इति श्लोकमुखेन ज्ञापयन्तः नमस्यन्ति।

**अभिमतमन्त्ररत्नपूर्वखण्डविवरणम् -**

अथ श्रीवैष्णवप्रपन्नानां द्वयमन्त्रोच्चारणं द्वयमन्त्रार्थानुसन्धानं सर्वदा आचरणीयमिति सर्वकालसर्वावस्थासु च प्रपन्नः वैष्णवः सन्ततस्फुरिताधरो भवेदिति शासनं श्रीरङ्गनाथमुखारविन्दादागतमेव। पाद्मसंहितायां ब्रह्मणा पृष्टः भगवानेवमुवाच -

मामेकं च श्रियायुक्तं भक्तियुक्तो नरोत्तमः।
द्वयेन मन्त्ररत्नेन मत्प्रियेण भजेत्सदा।।
अचिरात् मत्प्रसादेन मल्लोकं स गच्छति।
दुर्वृत्तो वा सुवृत्तो वा मूर्खः पण्डित एष वा।।
लक्ष्मीं च मां सुरेशेशं द्वयेन शरणं गताः।
मल्लोकमचिराल्लब्ध्वा मत्सायुज्यं स गच्छति।।

एवमेव ब्रह्मणा पृष्टा श्रीरपि कृपया वदति-

वेदान्तामृतमहाम्भोधेर्हरिणा द्वयमुद्धृतम्।
तत्द्वयं शृणु वक्ष्यामि सद्योमुक्तिप्रदं शुभम्।।

इति। तत्रैव पराशराय नारदः

अतिपापप्रसक्तोऽपि श्रीवैकुण्ठं पुरातनम्।
द्वयानुष्ठानमन्त्रेण नरश्शीघ्रेण गच्छति।।
अहो द्वयस्य माहात्म्यमहोवीर्यमहो बलम्।
मन्त्ररत्नं शुभतरं वेदसारं सनातनम्।।
सर्वपापक्षयकरं सर्वपुण्यविवर्धनम्।
श्रीकरं लोकवश्यञ्च सद्यस्संसारतारणम्।।
अतीतानागतज्ञानमात्मतत्त्वप्रकाशकम्।
सर्ववेदार्थविज्ञानं सर्वशास्त्रविवर्धनम्।।
मानसं वाचिकं पापं कायिकञ्च त्रिधा कृतम्।
द्वयस्मरणमात्रेण नाशं याति सुनिश्चितम्।।
तस्मात् द्वयेन देवेशं लक्ष्मीनारायणं प्रभुम्।

आराधय ऋषिश्रेष्ठ तद्द्वयं शृणु सुव्रतम् ।।[1]

इति द्वयमाहात्म्यं बहुधा प्रतिपादितम्। अत एव श्रीवैष्णवसम्प्रदाये द्वयार्थविवरणमेव परमलक्ष्यं भवति। सर्वत्रापि वेदान्तविद्यासु द्वयार्थमेव स्थापयन्ति। तदर्थमेव उपनिषदां श्रीरामायणादिग्रन्थानां व्याख्याः महात्मभिः प्रारब्धाः विराजन्ते। पाद्मे -

प्रणवं मन्त्ररत्नञ्च मन्त्रद्वयमुदाहृतम्।
ओमित्येकाक्षरं मन्त्रं गूढार्थं प्रणवं तथा।।
प्रणवस्य प्रकाशार्थं मन्त्ररत्नमुदाहृतम्।
प्रणवं प्रणवादूर्ध्वं मन्त्रद्वयमुदाहृतम्।।

इत्यादिभिः प्रणवस्य एकमन्त्रत्वमभिधाय तेन सहितस्य मन्त्ररत्नस्य द्वयाभिधानमिति प्रतिपादितम्। स्त्रीशूद्रादिसर्ववर्णविषयस्यास्य मन्त्रस्य नमश्शब्दान्तम् ऋष्याद्यङ्गन्यासकरन्यासराहित्यञ्च प्रतिपाद्य तस्यैव द्वयाभिधेयत्ववचनात् "द्वयेन मन्त्ररत्नेन" इति मन्त्ररत्नमात्रमेव बहुशो द्वयशब्दप्रयोगाच्च सात्यकीतन्त्रेऽपि "बुध्यस्यैतद्द्वयं ब्रह्मन् मामेवा-नन्यमानसः" इति एतावन्मात्रस्य द्वयत्ववचनात् अस्य मन्त्ररत्नस्य वाक्यद्वयात्मकस्य द्वयशब्दाभिधेयत्वं सिध्यत्येव।

श्रीमच्छब्दात्परं युक्तं नारायण इतीष्यते।
तत्परं चरणौशब्दस्तत्परं शरणं तथा।।
प्रपद्ये तत्परं युक्तं नमश्शब्दमतः परम्।
श्रीमते च तथा युक्तं परं नारायणाय च।।

एतत्सर्वाधिकारपक्षत्वेनापेक्षितमित्युच्यते-

सर्वोपायविहीनानां मदालम्बितचेतसाम्।
निर्मितं सर्वजातीनां रोगिणामौषधं यथा।।
देशकालविभागश्च न नक्षत्रपरीक्षणम्।
केवलं जपमात्रेण मामेवाप्नोत्यसंशयः।।

---

1 वादिकेसरि सुन्दरजामातृमुनि विरचिते दीपप्रकाशसहिते तत्त्वदीपे, द्वितीयप्रकरणे, पु. २८०,२८१, २९०,२९२)

इति वचनात् अयमेव सर्वाधिकारपक्षः पूर्वाचर्यैः परिगृहीत इति श्रीपराशरभट्टार्या अपि स्वकीये श्रीरङ्गराजस्तवे द्वयार्थमेव प्रतिपादयन्ति। एवं निरतिशयमाहात्म्ययुक्तमिदं मन्त्रशरीरं वाक्य-द्वयात्मकं कठवल्यादिषु 'सत्यं तद्द्वयं सकृदुच्चारणो भवति' इत्यादिना, अस्य वाक्यद्वयस्य अर्थशरीरन्तु श्वेताश्वतरोपनिषदि तैत्तिरीयोपनिषदि चाप्युक्तम्। यथा -

"यो ब्रह्माणं विदधाति पूर्वम् यो वै वेदांश्च प्रहिणोति तस्मै।
तं ह देवो आत्मबुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये।।
ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत"

इति। इत्थं श्रुतिस्मृतीतिहासपुराणादिसकलप्रमाणप्रतिपादितनिरति-शयवैभवयुक्तत्वात् आचार्यरुचिपरिगृहीतानुष्ठानप्रकाशस्य द्वयाभि-धानस्य मन्त्ररत्नस्य सर्वेषामात्मनां स्वोज्जीवनार्थं सर्वदाऽनुसन्धेयत्व-मवगम्यते। द्वयमन्त्रे वाक्यद्वयेन भगवच्चरणारविन्दशरणागत्यनुष्ठानं तत्प्राप्तिरूपपरमपुरुषार्थलाभं प्रतिनिर्भरत्वानुसन्धानं च प्रतिपाद्यते। उत्तरवाक्यस्य फलप्रार्थनावचनम्। फलसापेक्षस्य तदधीनत्वानु-सन्धानेऽपि तत्प्रार्थनानुवृत्तेः।

'तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता।
केशवापर्णपर्यन्ता ह्यात्मनिक्षेप उच्यते।।'

तत्र पूर्ववाक्येन भगवच्छरणवरणं स्वानुष्ठानतया प्रतिपाद्यते। वरणीयविषयविशेषः तत्प्रथमपदेन समस्तेनोच्यते। तत्र विशेषणांशेन श्रीमत्पदेन प्रपत्तव्यस्य भगवतः पुरुषकारविशिष्टत्वं प्रतिपाद्यते। अनेन श्रियः पुरुषकारत्वमवगम्यते। श्रीमन्नारायणः श्रीरङ्गविमाने नित्य-सन्निहितो भवति । श्रीपराशरभट्टार्याः श्रीवैष्णवसम्प्रदायानुगुणं पूर्वाचार्याणां वाक्यविवरणं कुर्वन्तः तत्रादौ द्वयमन्त्रस्थ श्रीमच्छब्दार्थं श्लोकत्रयेण प्रतिपादयन्ति स्म।

अस्ति वस्त्विदमित्त्थं त्वप्रसङ्ख्यानपराङ्मुखम्।
श्रीमत्यायतने लक्ष्मीपदलाक्षैकलक्षणम्।। ९ ।।

गुरुपरम्परावन्दनं समाप्य अत्र भगवत्स्तोत्रं प्रारभन्ते। अस्तीति माङ्गलिकप्रयोगः कविसमयः। अस्तीत्येव भगवान् बोद्धव्यः तस्येयत्तायाः प्रभावस्य च परिच्छेदानर्हत्वात्। एवमस्तीति न निरूपयितुं शक्यते ब्रह्म। 'अस्तीत्येवोपलब्ध्व्यः' इति कठवल्ली । भुविविष्णोः परमपदत्वेन श्रीरङ्गस्य प्रसिद्धिः । अस्तिशब्दस्य प्रथमपाठनेन कठवल्ली श्रीरङ्गराजविषय इति व्यज्यते। "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति ब्रह्मास्तित्वज्ञानाधीनत्वात् स्वसत्त्वस्य असता स्तोत्रा स्तवस्यासाध्यत्वात् स्तोतुः स्वस्य सिद्धिं समपादयति अस्ति वस्तु इति ब्रुवन् स्तवारम्भे श्रुतिस्मृतिप्रसिद्धिश्च द्योतते। सम्पत्सम्पन्ने श्रीरङ्गमन्दिरे लक्ष्म्याः पदयोर्लाक्षायावकपङ्क एव मुख्यं लक्षणं, एवमेव लक्ष्म्याः वक्षस्थलावस्थिततया तच्चरणपङ्कजयावकपङ्क एव श्रियःपतिलक्षणमिति, अत एवेदंतया इत्थंतया च प्रकर्षेण ज्ञाने लक्ष्मीपदलाक्षैकलक्षणत्वनिबन्धातिशयेन स्वरूपतः स्वभावतश्चा-परिच्छेद्यमित्यर्थः वस्तुपरतत्त्वं भवति। "तत्त्वं नारायणः परः" इत्युक्तः श्रीमन्नारायणः विद्यते। स्वयमपरिच्छेद्यस्वभावोऽपि कृपया सर्वसमाश्रयणत्वात् यः श्रीमन्नारायणः श्रीरङ्गविमाने नित्यसन्निहितो भवतीति प्रतिपादितवन्तः। अथ दशमे श्लोके -

> लक्ष्मीकल्पलतोत्तुङ्गस्तनस्तबकचञ्चलः।
> श्रीरङ्गराजभृङ्गो मे रमतां मानसांम्बुजे।। १० ।।

इत्यत्र पूर्वश्लोके तत्पूर्वश्लोके च वक्षसि लक्ष्म्याः स्थितिः प्रतिपादिता प्रजाभूतभट्टार्यमानसाम्बुजरमणाय नायकभृङ्गं प्रेरयितुमिति। "स्त्रीप्राय-मितरत्सर्वम्" इति तस्य स्त्रीत्वेऽपि तत् हृदयाम्भोजे नायकस्य रमणं तस्या भोगाय। तस्याः तादृशेषु स्वस्तनबाह्वादितुल्याभिमानात् भक्तस्य मानसाम्बुजं गत्वा तत्र रमस्वेति नियुज्यते श्रीरङ्गराजभृङ्गः। अयं तु श्रीरङ्गराजभृङ्गो स्त्रीप्रायस्य मम हृदये रमयतु । लक्ष्मीस्तनस्तबक-चञ्चलत्वजन्यतुल्यरतिं द्योतयति। तत्र चञ्चलत्वमत्र रतिरूपस्थायीभावः रसिकजनवेद्य एव। अनेनैकेन प्रकारेण सुलक्षितमिदं वस्तु। अदृश्यं दुर्दर्शं वस्तु मातृवल्लभ्यमानात्सुदुर्दर्शं भवति। श्रियःपतित्वद्योतक-

तत्पादलक्षाङ्कितत्वेनैव ब्रह्मत्वनिर्णयः "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति पुरुषसूक्ते निगदितः कारणत्वेन प्रसिद्धः सः श्रियःपतिः लक्ष्मीपतित्वस्य कारणत्वसामानाधिकरण्यम्। यत्र लक्ष्मीः पदं निवेशयति तस्य मङ्गळ-भूयिष्ठम्। सुदर्शनपाञ्जन्यादिलञ्छनाः श्रीवैष्णवाः भवन्ति। लक्ष्मीपद-लाक्षैकलाञ्छनो महाविष्णुः भवति।

लक्ष्मीचरणलाक्षाङ्कसाक्षात्श्रीवत्सवक्षसे।
क्षेमंकराय सर्वेषां श्रीरङ्गेशाय मङ्गळम्।।

इति हि मङ्गळाशासनं भागवताः कुर्वन्ति । इदमित्थं त्वप्रसङ्ख्यान-पराङ्मुखोऽपि लक्ष्मीपुरुषकारप्राबल्यवतामस्माकं मनस्येव श्रीरङ्ग-राजभृङ्गः रमतामित्याशासते। भृङ्गवृत्तान्तः श्रीमद्भागवतभ्रमर-गीतिकावृत्तान्तं व्यज्यते। लक्ष्मीस्तनस्तबकचञ्चलत्वजन्यरतिं द्योतयति।

**श्रीपराशरभट्टार्याणां श्रीरङ्गकैङ्कर्यप्रार्थना -**

अथैकादशे श्लोके श्रीपराशरभट्टपादाः स्वकीयां प्रार्थनां विज्ञापयन्ति। इतः पूर्वेषु श्लोकेषु दम्पती पृथक् पृथङ्नतौ। इदानीमुभाभ्या-माशीर्वरणमात्रोपवर्ण्यते। मन्मानसाम्बुजे रमणेन हृष्टनायिका तं गाढं परिषस्वजे। उभयोः गाढोपगूढत्वावसरेऽभितं प्रार्थयते।

स्वस्ति श्रीस्तनकस्तूरीमकरीमुद्रितो रसः।
श्रीरङ्गराजाच्छरदः शतमाशास्महे तराम्।।

शरदः शतं कुशलमाशास्यते। वेदान्ताचार्या अपि श्रीमति पादुकासहस्रे 'भरतसमयसिद्धां पादुके भावयंस्त्वां शतमिह शरदस्ते श्रावयेयं समृद्धिम्।।' इति भट्टपादानामभिप्रायानुगुणम् आशासितवन्तः। यद्यत्यायुराशासनं परमैकान्तिनां नात्यन्तशोभनं तथापि "कुर्वन्नेवेह कर्माणि जिजिविषेत् शतं समाः" इति श्रुतिविहितकर्माणि सम्यगनुष्ठास्यति चेत् शतमपि समाः जिजिविषेयुरित्यनुमतिं ददाति। अत एव सन्ध्यावन्दने माध्यह्निके "पश्येम शरदश्शतम्। नन्दाम शरदश्शतम्। मोदाम शरदश्शतम्।" इति श्रूयते। अस्मिन् श्लोके श्रियः स्तनयोः कस्तूरीमकर्या मुद्रितो रसः श्रीरङ्गराजात् शतं शरदः स्वस्ति आशास्महे तराम्। अत्र साभिप्रायविशेषणानि सन्ति। श्रिया नित्यं

संश्लिष्टत्वबलमवलम्ब्य श्रीरङ्गराजाद्यावदायुषं तत्स्वरूपाद्यनुभवरूपं श्रेयो भूयादिति प्रार्थितवन्तः । वस्तुतः श्रीपराशरां: यावदायुषं लक्ष्मीनारायणमिथुनसेवां श्रीरङ्गे अभिलषितवन्तः । परन्तु दीर्घजीवनात्परं दिव्यजीवनमधिगतवन्तः अल्पे वयस्येपि स्वाचार्यपद-मारूढाः। भगवान् श्रीरङ्गराजः पराशरभट्टार्याणां विरहमसहमानः ब्रह्मरथं प्रेषयामास। अहो किमु वा वक्तव्यं आचार्याणां महिमा? श्रुतिप्रयुक्तस्सन् वाच्येच्छाविषयत्वानुसारेण श्रीरङ्गराजस्तवन-रूपकैङ्कर्यव्याप्ताः शतसमाः सुतरामाशासनीया एवेति आशास्महे तराम् इति स्वपितृमार्गमेवाभिलषन्ति ।

'नीलाञ्जनाद्रिनिभमुन्नसमायताक्षमाजानुजैत्रभुजमायतकर्णपाशम्।
श्रीवत्सलक्षणमुदारगभीरनाभिं पश्येम देव शरदश्शतमीदृशं त्वाम्।।'
(कूरेशानां श्रीवैकुण्ठस्तवे ६७)

इति तरपा ज्ञापयन्ति। एषु श्लोकेषु त्रयेषु श्रीमच्छब्दार्थमुक्त्वा स्वयमेव समाश्रितसंरक्षण त्वरापरवशानां सुदर्शनादीनामपि नित्यसन्निधानं वदन्तः प्रणमन्ति।

**श्रीरङ्गनाथस्य पञ्चायुधविषये पराशराणामुत्प्रेक्षा -**

शयानो रङ्गराजः अस्मदार्तिं न हरेदिति मा मंस्थाः। स्वस्य किञ्चिदग्रे स्वात्मनेव सन् रङ्गराजस्य उत्सवमूर्तित्वेन पञ्चायुधीं बिभ्रज्जागरूकस्तिष्ठतीति ज्ञापयन्ति। भगवन्तः यामुनाचार्याः स्वकीये स्तोत्ररत्ने-

'अभूतपूर्वं मम भावि किं वा सर्वं सहे मे सहजं हि दुःखम्।
किन्तु त्वदग्रे शरणागतानां पराभवो नाथ न तेऽनुरूपः।।'

इति प्रपन्नजनाः वयं दुःखं सहामहे। चिरविलम्बं च सहामहे पूर्वं निवेदयामासुः। श्रीपराशराः तमद्भुतं भावं मनसि निधाय श्लोकमेनं विज्ञापयन्ति। वयं तं न सदा सेवामहे सकृदेव तं प्रपद्यामहे। सोऽस्मान् त्रातुं सदायुधपञ्चकं बिभर्तीति।

'पातु प्रणतरक्षायां विलम्बमसहन्निव।
सदा पञ्चायुधीं बिभ्रत्स नः श्रीरङ्गनायकः।।' २२ ।।

भगवान् श्रीरङ्गनायकः समाश्रितसंरक्षणविषये कालक्षेपं सोढुमशक्नुवन्निव सदा पञ्चायुधीं[1] वहन् तिष्ठतीति पूर्वोक्तपुरुषकारभूतलक्ष्मीवल्लभः अस्मान् पातु इति वदन्तः असन्निहतायुधाह्वानपर्यन्तमार्तप्रणतसंरक्षणविलम्बं अक्षाम्यन्निव पञ्चायुधीधारणे भगवदभिप्राय उत्प्रेक्ष्यते। अत्र श्रीविष्णुसहस्रनामस्तोत्रान्ते समीरितः श्लोकः-

'शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः।।'

इति पञ्चायुधमूर्तिं ज्ञापयन्ति। पञ्चायुधस्तोत्रान्ते -

"स शङ्खचक्रं स गदासिशार्ङ्गं पीताम्बरं कौस्तुभवत्सचिह्नम्।
श्रिया समेतोज्वलशोभिताङ्गं विष्णुं सदाहं शरणं प्रपद्ये।।"

इति पठ्यमानो श्लोकोऽपि पञ्चायुधमूर्तिं ज्ञापयति। अत्रायमवधेयांशः। भगवतः श्रीरङ्गनाथस्य मूलस्वरूपे दिव्यमङ्गळार्चाविग्रहे चतुर्भुजाः वा शङ्खचक्रादयो नाधुना दृश्यन्ते। तत्र कारणं इदमित्थं न जानीमः। भगवान् द्विभुजः विनैव पञ्चायुधं नेत्रसात्करोति। श्लोकोऽयम् उत्सवमूर्तिनम् अथ वा श्रीवैकुण्ठनिकेतनं मनसि निधाय ग्रथितवन्तः इति ऊह्यते। भगवत्याः लक्ष्म्यास्तद्वल्लभस्यापि गुरुपरम्परानिष्ठत्वात् श्रीमन्नारायणशब्दार्थरूपत्वाच्च तयोर्वन्दनमपि कृत्वा वक्तव्यमर्थमपि संक्षिप्य विस्तरेण स्तोतुं स्वस्वस्तोत्रानधिकारमाशङ्क्य सप्तभिः श्लोकैः समाधत्ते।

**श्रीपराशरभट्टार्याणां विनयप्रकारः -**

श्रीपराशरभट्टार्यैः वक्तव्यमर्थविस्तरेण स्तोतुं स्वस्वस्तोत्रानधिकार इति विनयप्रकटनम् - तत्र त्रयोदशे श्लोके -

'यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानताम्।।'

[1] [पञ्चानामायुधानां समाहारः पञ्चायुधी। १. सुदर्शनं नाम चक्रराजः २. श्रीपाञ्चजन्यं नाम शङ्खः ३. कौमोदकी नाम गदा ४. नन्दकः खड्गः ५. शाङ्र्गः नाम धनुः]

इति श्रुत्यनुसारेण

'अमतं मतं मतमथामतं स्तुतं परिनिन्दितं भवति निन्दितं स्तुतम्।

इति रङ्गराजमुदजूघुषस्त्रयी स्तुमहे वयं किमिति तन्न शक्नुमः।।'

अमतं यथावदज्ञातं ब्रह्ममतं भवति। अपरिच्छिन्नविभवतया ज्ञानस्यैव सम्यक् ज्ञानत्वात्। अथ मतं सम्यक् ज्ञातं यदि अमतम् अज्ञातं भवति सः न वेद। अपरिच्छिन्नविभवस्य सम्यक् ज्ञानायोगात्। "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।" इत्यादिरूपेण स्तुतं परिनिन्दितं भवति। "सहस्रशीर्षा पुरुषः" इति पुरुषसूक्तादिषु उक्तवैभवत्वात् निन्दितप्रायमेव भवति। यदि निन्दितं चेत् यत्तदद्दृश्यमग्राह्यं निष्कळं निष्क्रियमिति ... अनुसरेण स्तुतं भवति। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्युक्तावाङ्मानसगोचरमहिमत्वानुकूलत्वात् तादृश-निन्दायाः स्तुत्या निन्दायाः स्तुतेश्चोद्घोषणं तात्पर्यपर्यवसानवृत्त्येति मन्तव्यं भवति। एवमादिप्रकरणेन त्रयी श्रीरङ्गनायकंमुद्दिस्य कृत्स्नजनपरिज्ञेयमुच्चैरघोषयत्। तस्मात्कारणात् वयं कथं स्तुतिविषयं कुर्मः? शक्ता न भवाम इति (श्रुत्याप्यशक्यभगवत्स्तवाशक्तिरस्माकं किं पुनः न्यायसिद्धेति विचारणीयः।) श्रीयामुनाचार्याः स्वस्तोत्ररत्ने -

"स्तोतुं तदीयमहिमस्तुतिमुद्यताय
महां नमोऽस्तु कवये निरपत्रपाय"

इति नैच्यानुसन्धानमकार्षुः। स्तोत्रप्रणेतारः स्तुतिशक्यभावादिकं वर्णयेयुः स्तोत्रारम्भकाले। चतुश्श्लोक्यां श्लोकद्वयेन स्तुत्यशक्तिः वर्णितः। परिच्छेदोद्यमस्य स्तुतिविपरीतनिन्दोपपादकत्वे केन प्रकारेण वयं तं स्तुमः इति वदन्तः न शक्नुमः इत्युक्तिरेव वरमिति भावयन्ति। तथोक्तौ स्तुतिकृता स्यात् इति विरमन्ति। स्तुमहें वयं किमिति तन्न शक्नुमः इत्युक्तावप्यधिकारी नाहमिति नैच्यानुसन्धानं प्रकटयन्ति चतुर्दशश्लोके। यदि परमदयाळुः श्रीमन्नारायणः स्वमहिमानं स्तोतुं शेषाहेरिव ममापि सहस्रवदनादिवैभवं अनुगृह्णाति, तथापि मम स्तुतिशक्त्यभावंविभवे अंशवत्त्वं भवति। "ममैवांशो जीवलोके जीवभूतस्सनातनः" इति भगवद्वाक्यानुसारम् अहं तदंशः। अंशभूतोऽहं तदानन्दादिवैभवे अंशभाक्

भवेयम्। समश्च ममांशो भगवता। न मनागपि वैषम्यम्। तेन परमं साम्यं ममांशः। स्तुतिशक्त्यभाव एव मे फलं भवति। तस्मादनुरूप्यमेव वैभवदानेन विभवलाभ इति फलति। ईश्वरचिह्नभूतलक्ष्मीपतित्व-जगत्कारणत्वद्यैश्वर्याहते सर्वं भगवद्वैभवं तत्साम्यमापन्नानां सर्वेषां समानं भवति। प्रसक्तस्य हि प्रतिनिषेध इति न्यायात् सहस्रवदनत्वादौ सति स्तुतिशक्तिः प्रसज्येत, तदा प्रीतिबोधश्च सम्भवेदिति भावः। अस्य श्लोकानुगणश्लोकः श्रीवेदान्ताचार्याणां पादुकासहस्रे परिशीलयामः -

'निश्शेषमम्बरतलं यदि पत्रिका स्यात्
सप्तार्णवी यदि समेत्य मषी भवित्री।
वक्ता सहस्रवदनः पुरुषः स्वयं चेत्
लिख्येत रङ्गपतिपादुकयोः प्रभावः।।' (प्रभावपद्धतिः, २)

अत्र सहस्रवदनशब्दः उभयोः पराशरदेशिकयोः श्रीरङ्गनाथविषये भावसाम्यं व्यनक्ति रसिकजनैकवेद्यार्थश्चं भवति। स्तुतिशक्त्यभावश्च कथमविभवत्त्वम् इति चेत् अभावविभावोऽयं न भावविभावः। दोषाभावो विभवः स्यात्। विभावानन्त्यं च भावरूपम्। सहस्रवदनादिवैभवदानं स्तोतृत्वप्रसक्तिलाभाय भवति। एवमेव भगवतोऽपि स्तुतिशक्त्यभाव एव। "योऽस्याध्यक्षः परमे व्योमन् सोऽङ्गवेद यदि वा न वेद" इति हि श्रुतिः यः परमे व्योम्नि अस्य जगतः साक्षात्कारक्षमः ईश्वरो वा सः वेद जानाति यदि वा न वेद स्वमहिमानमिति पञ्चदशे विवृण्वन्तः पराशराः, वेदः अनर्घ्यविदं सर्वज्ञं रङ्गनाथमात्मनि सन्देहवान् भवतीति यत्तत् उचितमेव। सर्वज्ञेनापि तत्त्वतो परिच्छिन्नस्य परिच्छिद्य ज्ञातु-मशक्यत्वादिति भावः। स्वेनाप्यपरिच्छेद्य वैभवो रङ्गनाथः दोषमलीमसाभिः नाम अज्ञानसंशयविपर्ययादिभिः कारणभूतान्तः-करणदोषैः यद्वा असाधुत्वाप्रयुक्त्वादिशब्ददोषैः असदस्यत्वपरिहास्यत्वा-नलङ्कारत्वाद्यर्थदोषैर्वा मलीमसाभिः मद्वाग्भिः ईश्वरसम्बन्धि तिरस्करोति। सर्वज्ञेन स्वेनापि दुर्ज्ञेयस्वमहिमस्तवम् अज्ञतमेन मयाकारयन् स्वकीयसर्वेश्वरत्वौन्नत्यं तिरस्करोत्येवेति विशदीकुर्वन्ति स्म। अथ षोडशे स्तोत्रपुरुषान्तराभावे मलीमसावचसापि मयास्तवः

कार्यः तथाविधसमीचीनस्तुतिसद्भावेऽपि मया स्तवविधानं स्नातगज-धूलीस्नानन्यायतुल्यमिति वदन्तः श्रीरङ्गकम्रः संस्कृतद्राविडसूक्तैः भवन्तं स्वं मदुक्तैः मलिनीकरोति। स्नात्वापि धूलीरसिकं स्वगात्रे स्वहस्तेनैव धूलीप्रक्षेपे प्रीतिमन्तं कलभं को वा निवारयति? बालगजवदतिस्वतन्त्रत्वादेवं करोतीति प्रत्यपादयन्। अत्र श्रीवैष्णव-सम्प्रदाये भगवतः तत्त्वप्रतिपादनरूपादिकग्रन्थाः उभयवेदान्तेषु विराजन्ते। संस्कृतवेदस्य यावान् विशेषः ततोऽपि द्रविडवेदस्य विशेषः पूर्वाचार्यैः अभ्युपगतः। भगवतः स्वरूपरूपगुणविभूत्यादिकं द्रविडवेदे दिव्यसूरिभिः प्रपञ्चितप्रायमस्ति। विशिष्टाद्वैतसिद्धान्तावगमनाय उभयवेदान्ताध्ययनं प्राधान्यं भजते। भगवतः निरङ्कुशस्वातन्त्र्यत्वात् सर्वं सम्भवेत्। परतन्त्रेण भवता कथं भगवन्तं मालिनीकर्तुं स्तोत्रमुपक्रमत इत्यस्मिन् विषये सप्तदशे श्लोके-

'किन्तु प्रपत्तिबलतारितविष्णुमाया  
मद्वंशराजकुलदुर्ललितं किलैव।।  
श्रीरङ्गराजकमलापदलालितत्वं  
यद्वापराध्यति मम स्तुतिसाहसेऽस्मिन्।।'

श्रीपराङ्कुश-नाथ-यामुन-रामानुजमुनिप्रभृतयः पूर्वाचार्याः प्रपन्नजनाः भवन्ति। ते च दुरत्ययां गुणमयीं मायां प्रपत्तिबलेन तारितवन्तः। तेषां महाभागवतोत्तमानां राजकुलजनननिमित्तो दुर्विलासः एवं मम स्तुतिसाहसे अपराध्यतीति भगवन्मलिनीकरणकारणस्तोत्रात्मक-साहसरूपापराधहेतुर्भवतीति उद्वेलराजकुलवाल्लभ्यवतां राजापराध-हेतुर्भीतिः न भवतीति वदन्ति। यद्वा श्रीरङ्गनायकनायक्योः चरणाभ्यां लालित्वं साहसे अपराध्यतीति वदन्ति। यतो हि श्रीरङ्गराजाभ्यां श्रीपराशरभट्टार्याः पुत्रतयोपलालिताः इति प्रसिद्धिः वर्तते। अतः पुत्रस्य स्वोपलालनं मातापितृविषयापराधभयं न भवेदिति नातिचित्रम्। अतः भगवतः अत्यान्ताभिमतपूर्वाचार्यसन्तानसंभववद्वैयात्यं वा श्रीश्रीरङ्गराजोपलालितत्वप्रयुक्तवैयात्यं वा स्तुतिसाहसरूपापराधे प्रवर्तयतीति सम्भाषन्ते। प्रायशः श्रीपराशरभट्टार्याणां कृतयः भगवता

सम्भाषणरूपेण भवन्ति। अम्ब मातः जननि इति महालक्ष्मीं स्तोत्रेषु सङ्गिरन्ते। तद्वत् भगवन्तं प्रत्यक्षेण सम्भाषणं कुर्वन्ति। श्रीरङ्गराजस्तवस्याध्ययनकाले श्रीयामुनदेशिकानां स्तोत्ररत्न-श्रीसूक्तयः पाठकजनानां हृदयक्षेत्रे परिस्फुरन्त्येव। भगवतः सन्निधौ यावानधिकारः यामुनार्याः प्रदर्शितवन्तः, तावानधिकारः भट्टपादा अपि प्रदर्शयन्ति। इत्थं प्रसक्तानुप्रसक्तशङ्कायाः 'परिहारमुक्त्वा परमप्राकृतेन "सो अङ्गवेद यदि वा न किलेति वेदस्सन्देग्धि" इत्यादिश्लोकार्थेन सङ्गमीय स्वस्यापि सर्वज्ञतुल्ययोगक्षेमतया स्तोत्राधिकारमामनन्ति। अष्टादशे श्लोके

'नाथस्य च स्वमहिमार्णवपारदृश्वा
विज्ञानवाग्विलसितं सहते न वेदः।
आपेक्षिकं यदि तदस्ति ममापि तेन
श्रीरङ्गिणः स्तुतिविधाहमध्यकार्षम्।।

वेदः श्रीरङ्गनाथस्य देवाधिदेवस्य महिमार्णवपारदृश्वा विज्ञान-वाग्विलसितं न सहते। स्वमाहात्म्यपरिच्छेदक्षमज्ञानजनकवचन-विकासाभाववते। भाववतो भागवतोऽपि स्वसूक्त्यनुगुणापेक्षजन्यं वाग्विलसितमस्ति यदि तादृशं वाग्विलसितं ममापि सम्भवति। तेन हेतुना स्तोत्रविधाने अधिकृतोऽभवम्। कुलाचलपरिमाणास्तु नाथशक्तिः। अणुप्रमाणा भवतु मच्छक्तिः। न तावता तारतम्येन ममाधिकारलोप इति यथाशक्तिस्तवनशक्तिसमार्थ्यमधिकारप्रयोजकमिति "अहमध्यकार्षम्" इति निगमनवाक्येन लुङ्गाधिकारस्य सिद्धत्वं कीर्त्यते। न वर्तमानप्रयोगो वा भविष्यत्प्रयोगो वा विहितः। अथैकोनविंशतिश्लोके अन्यत्रातद्गुणोक्तिः स्तुतिः भवति । भगवति सकलकल्याणगुणवति अतद्गुणोक्तिः स्तुतिरेव भवति । स्वाभाविकी ज्ञानबलक्रिया च इति भगवद्गुणाः स्वाभाविकाः। भगवतोऽन्यत्र दृश्यमानाः भगवद्गुणलेशाः न स्वाभाविकाः भवन्ति। सर्वज्ञसर्वशक्तिसर्वरक्षक इत्यादिरूपेण भगवन्निष्ठोत्कर्षचौर्येण भगवद्व्यतिरिक्तानां स्तुत्यत्वात्तदितरेष्व-तद्गुणोक्तिः भगवति तद्गुणोक्तिश्च स्तुतिः भवति। यदि कश्चित्

स्तोता भगवद्व्यरिक्तमुत्कर्षवद्वस्तु स्तुत्यात् तत्र दृष्टस्योत्कर्षस्य भगवत्तेजोंशसम्भवत्त्वात् स्तूयमानस्यास्वाभाविकत्वादस्वत्वाच्चास्वभाव-भूतेनोत्कर्षेण स्वभाववर्णनरूपस्तुतिः कृता स्यात् स्तूयमानस्योत्कर्षस्य तात्त्विकं भगवदीयत्वमपलप्य चौर्येणैव स्तुतिः क्रियते। एवं चौर्यमुपपादितं भवति। अतः वयं विद्यमानार्थवर्णनं कुर्मः इति भट्टार्याः वदन्तिः। सा स्तुतिः अपि पूर्ववन्न शक्या इति विज्ञापयन्ति। तस्य वर्णनीयस्य विद्यमानस्यार्थस्य निरवधिकत्वादिति अनन्तजिह्वेनानन्तेन अनन्तशाखैराम्नायैः साक्षात् सरस्वत्या च दुरुदाहरमहिमा इत्याचार्याः सहस्रनामभाष्ये भणन्ति। यद्यप्यसीमानोऽनन्ता वेदास्तेषां हरिविभव-सम्बन्धादेव स्वात्मलाभः भवति। वर्षबिन्दोरब्धाविव सम्बन्धात् नाम एकत्र वाच्यवाचकभावरूपसम्बन्धः अन्यत्र स्पर्शारूपसम्बन्धः तस्मात् स्वसत्तामात्रलाभः भवेत्। हरिविभवसागरे पतितश्चेद्वागर्वबिन्दवस्ते स्वात्मलाभं प्राप्नुयुः । अन्तःपतिताश्चेत् शुष्येयुः। न तु कबलनतः इति स्तोतुः मे एवं न किं? एवमेव एकादेशस्तोतृत्वं ममाप्यस्त्येवेति प्रत्यपादयन् ।

**कावेर्याः स्तवः-**

अथ श्रीपराशरभट्टार्याणामत्यन्तप्रीतिपात्रोऽयमंशः कावेरीस्तवः। मनोहररूपः सहृदयान् भक्तान् भागवतान् हर्षोत्फुल्लमानसान् करोति। शब्दसौन्दर्यः रीत्यादयः काव्यत्वशोभावहाः नितरां गुञ्जन्ति। श्रीपराशरार्याः बाल्यात्प्रभृति कावेरीपरिवृतश्रीरङ्गवाससौभाग्यधनिनः एव । अतः कावेरीशब्दमात्रेणैव कमप्यलौकिकभक्त्याभिनिवेशाः भवन्ति स्म। अतः प्रागेव विवरणीयमन्त्ररत्ननिष्ठश्रीमत्पदस्य विवृतत्वात् नारायणपदैकदेशनारपदं विवरीतुकामाः इत्थं स्वस्तुत्यधिकारं दृढीकृत्य स्तुतिं प्रारभमाणाः प्रथमतः श्रीरङ्गनगरदिव्यालङ्कारभूतां कावेरीं पञ्चभिः मनोहरैः श्लोकैः स्तुवन्ति। तत्र --

कावेरीमवगाहिषीय भगवद्भोगान्तरायी भवत्<br>
कर्मक्लेशफलाशयप्रशमनोद्वेलामलस्रोतसम्।<br>
जन्तोस्संसरतोऽर्चिरादिसरणिव्यासङ्गभङ्गायया

लोकेऽस्मिन् विरजेव वेल्लितजला श्रीरङ्गमालिङ्गति।।

अस्मिन्श्लोके संसरतां जीवात्मनाम् अर्चिरादिसरणिव्यासङ्गः भङ्गाय भूलोके वेल्लितजला विरजेव इयं कावेरी श्रीरङ्गमहाक्षेत्रमालिङ्गति। कुतो वा श्रीरङ्गक्षेत्रमेवालिङ्गतीति चेत् भगवद्भोगान्तरायीभवत्क्लेशफलाशयप्रशमनायेति वदन्ति। विरजातौल्यं सम्पद्यन्ते। क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः ईश्वरः इति योगसूत्रं किल। ईश्वरेण भोगे परमसाम्यं मुक्तिदशायां सिध्यति। संसारिणः क्लेशकर्मविपाकाशयाः भवन्त्येव[1]। तेभ्यः मुक्तोऽसंसारी भवति। तद्विमोकश्च विरजास्नानेन सिध्यति। तल्लभ्यतेऽत्रैव श्रीरङ्गाऽश्लेष्टुकावेरीस्नानेन। अनन्तरश्लोके श्रीमन्तः भट्टार्याः कावेरीशब्दशक्त्या कामपि चमत्कारभावनापरम्परां ससन्दर्भं विज्ञापयन्ति। इयं नंदी कवेरस्य आत्मजेति कावेरीनाम्ना व्यवह्रियते। स्त्रीजनानां तु पितुः नामस्मरणं सन्तोषजनकं भवति। यथा जानकी, वैदेही, द्रौपदी, पार्वती, जाह्नवी, भागारथीत्यादीनि नामानि प्रसिद्धानि तद्वत् कावेरीनामापि। दक्षणभरतदेशे कावेर्याः स्थानं निरुपमानं चकास्ति। एषा कावेरी

---

[1] १. अविद्यादयः क्लेशाः क्लिश्यन्त्यमी पुरुषं सांसारिकविविधदुःखप्रहारेण।

२. कर्माकुशलाकुशलानीति धर्माधर्मास्तेषां च कर्मजत्वात् उपचारात् कर्मत्वम्।

३. विपाकाः- जत्यायुर्भोगाः।

४.क्लेशाः- अविद्यास्मितारगद्वेषादिभिनिवेशिताः।

५. अविद्या - अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः।

६.अस्मिता- सर्वदा अहमेमेवं भूयासमिति परिगृहीतशरीर एवात्मबुद्धिपूर्वकनित्यता प्रार्थना।

७. रागः- अनुभूयमानसुखसजातीयेषु तृष्णा।

८.द्वेषः- अनुभूयमानदुःखजातीयेषु प्रातिकूल्यबुद्धिः।

९.अभिनिवेशः- दुर्निवारयोः रागद्वेषयोः परिपाकविशेषाः।

१०. फलानि- कर्मफलभूतजायायुर्भोगाः।

११.वासना- पुण्यपापरूपकर्मपरम्पराप्रयुक्ततत्सजातीयकर्मान्तरप्रवृत्तिहेतुः।

१३.आशयः- एते भगवद्भोगप्रतिबन्धकाः भवन्तीति भावः।

भगवत्कैङ्कर्यायैव स्वजीविकां समर्पयति। सागरपत्नी कावेरी दुग्धसागरसुता महालक्ष्मीः सागरस्य जामाता श्रीरङ्गराजः। अतः जामातृगृहमायाताश्वश्रूः पुत्री जामातृविभावानुरूपं महार्धाणि लोकोत्तरद्रव्याणि स्ववीचीकरैरुपहरतीति भावमस्मिन् श्लोके निक्षिप्तवन्तः। श्रियः श्रियःपतेः रङ्गराजस्य किं वाहं कुर्यामिति कावेरीनद्याः आकुलतां पराशराः स्वमधुरवाक् प्रवाहैः प्रवाहयन्ति यथा

'चञ्चच्चामरचन्द्रचन्दनमहामाणिक्यमुक्तोत्करान्।
कावेरीलहरीकरैर्विदधती पर्येति सा सेव्यताम्।।'

इयं कावेरी कवेरराजपुत्रीत्वोक्तिः सह्यपर्वतात् पितृगृहादानीत-चामरचन्दनादिविभवप्रदर्शनाय ज्ञापयन्ति। कर्पूरमहामाणिक्य-मुक्ताचामरचन्दनादयः प्रवाहानीतैः उत्क्षिप्य स्वकरैरुत्कीर्यन्ते एवमेव। पर्येति इतिक्रियापदेन भूलोके परमपदे रमत इति वदन्तः 'स तत्र पर्येति जक्षत्क्रीडन् रममाणः' इतिवत् "स तत्र पर्येति" इति श्रुतिः प्रत्यभिज्ञायते। तां कावेरीं सेवन्त्विति जोघुष्यन्ते, यतो हि कावेरी श्रीरङ्गनाथाङ्घ्रिसेवां श्रीरङ्गक्षेत्रञ्च यथा परिचरति तदपि श्रीपराशराः द्वाविंशतितमे श्लोके स्तुवन्ति स्म।

'तीर्थं शुन्धति पाति नन्दनतरून् रथ्याङ्गाणान्युक्षति।
स्नानीयार्हणपानवारि वहतः स्नातः पुनीते जनान्।।'

इति श्रीरङ्गमाहाक्षेत्रे कूपतटाकादितीर्थानि कावेरीजलैः शुध्यन्ति कावेरी सामीप्यं विना नात्रत्यतीर्थानां शुद्धता भवति। चन्द्रपुष्करिण्यादिपुण्यतीर्थानि च कावेरीजलेन पूर्यन्ते शोध्यन्ते च। तीर्थीकुरिवन्ति तीर्थानि कावेर्यापः इति वैशिष्ट्यमुच्यते। एवमेव श्रीरङ्गद्वीपवनस्थवृक्षान् पाययित्वा पाति। राजमार्गाः कावेरीप्रवाहजलैः स्वयमेव वा पवनाहृतैर्वा सिच्यन्ते। भगवदभिषेकार्थं भगवन्निवेदनार्थञ्च स्वच्छमधुरं वारि वहति। जामातृसेवार्थं नानादिग्भ्यः आगतान् सर्वान् जनान् पवित्रयति। "श्यामं वेदरहो व्यनक्ति" परोक्षभूतमतीन्द्रियं वेदरहः। वेदैश्चसर्वैरेकवेद्यं गूढतमं वस्तु स्वपुलिने स्वमध्ये सर्वदृश्यतया प्रदर्शयति। श्याममिति वेदरहस्यभूतप्रपत्त्युपायो व्यावर्त्यते सर्वगुह्यतमं

भूयः इति शरणागतेः रहस्यतमत्वं "मुमक्षुर्वै शरणमहं प्रपद्ये" इति वेदप्रतिपाद्यत्वञ्च। सागरपुलिने व्यञ्जितं तद्रहस्यं श्यामेन भगवता उपेयभूतं श्यामरह इदम्। इयं कावेरी विष्णुपदीत्वमात्रमुखरां गङ्गां हसन्ती वास्तीति यतो हि गङ्गा विष्णुपादोद्भवमात्रत्वेन स्वमहिमानमुच्चैरुद्घोषयति प्रवाहशब्दैः। विष्णुमेव कृत्स्नं इयं कावेरी व्यनक्ति। न तत्पादमात्रत्वम्। अत एव श्रीपराशराः कावेरीं फेनैर्हसन्तीव विराजमानां स्तुवन्ति। हेमापगा इयं कावेरी अघं हन्त्विति गङ्गानद्य अपि वैशिष्ट्येन स्तुवन्ति। तदनु त्रयस्त्रिंशत्तमे श्लोके। "अगणितगुणावद्यं" इत्यत्र अप्रतिक्रियमपि सर्वं स्थिरत्रसं अगणित-गुणावद्यं पयःपूरैः आप्यायन्ती शिशिरमधुरगाधा रङ्गपतेः दयैव जगद्धात्रीभूत्वा प्रवहति सा मरुद्वृदा कावेरी नः पुनातु इति प्रार्थयन्ति। अत्र श्रीरङ्गनाथस्य दयैव कावेरीरूपेण प्रवहतीति वदन्ति। एवमेव देशिकसार्वभौमाः श्रीवेङ्कटेश्वरदयामपि वेङ्कटाचलत्वेनोपवर्णिताः।

प्रपद्ये तं गिरिं प्रायः श्रीनिवासानुकम्पया।
इक्षुसारस्त्रवन्त्येव यन्मूर्त्या शर्करायितम्।। (दयाशतकम्, १)

दयाप्रभाववर्णने देशिकानां परीमळभावाः कदाचित् श्रीपराशर-भट्टार्याननुसरन्तः भागवतजनहृदयविकासं कुर्वन्त्येव। कावेरीप्रवाहस्य दयाप्रवाहस्य च भूयः साम्यं भवति। नदीप्रवाहः केदारपोषणद्वारा जगद्धारकः चेत् भगवद्दयां विना न जगद्धीयते। अगणितगुणावद्यमिति पदं "दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम्" इति श्रीरामचन्द्रस्याभयप्रदानं ज्ञापयति। अथ कावेरीस्तवेऽन्तिमोऽयं श्लोकः मालिनीवृत्तभूयिष्ठः हृदयाह्लाददायिनी परः नितरां शोभते।।

तनुतरळतरङ्गै र्मन्दमान्दोळ्यमान.....।
क्रमुकजमकरन्दैः मांसलापा मदंहः।।

कावेरी जगतीति पूर्वमुक्तवन्तः। इदानीं कावेरीतीरविटपमञ्जरीस्थ-भृङ्गाः स्वपन्तीत्युच्यन्ते । कावेरीतरङ्गाणां तनुत्वमन्दत्वादि-स्वभावाश्च वर्ण्यन्ते। जामातृक्षेत्रस्थ भृङ्गानां डोलान्दोलमारोच्यते कावेर्याऽनया इति स्मरन्ति। कावेरीतीरे नारिकेळबाहुळ्यं प्रसिद्धम्।

कनकसरित्वेऽपि कावेरी निम्नगा भवति। निम्नजनसुलभा निम्नकेदारसुलभा च। अतः निम्नगा निम्नस्य पापं निर्हरत्विति प्रार्थयामासुः। तीररुहणामनोकहानां बहुविधत्वमकरन्दनित्यत्वेपि नारिकेळपूगतरुमात्रोपादानं तत्प्राचुर्यसूचनायेति मन्तव्यं भवति। अत्र कावेरीसलिलानां सलिलस्यान्तरस्यातापि सूचिता।

**कावेरीद्वीपस्तवः-**

श्रीवैष्णवसम्प्दाये प्रतिदिनं भगवत्सन्निधौ कावेरीं स्तुवन्ति। 'कावेरी वर्धतां काले काले वर्षुतु वासवः । श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम्।।' इति श्लोकोऽयं कावेर्याः वैशिष्ट्यं व्यनक्ति। कावेरी विराजा सेयं इत्यत्र विरजानदीत्वारोपः यथार्थ एव। एवं कावेरीवन्दनान्तरं तदीयद्वीपवन्दनमिति श्लोकद्वयेन प्रतिपादयन्ति श्रीपराशराः । पञ्चविंशतितमे श्लोके कावेरीमध्यस्थो भगवदधिष्ठितो द्वीपो नमस्क्रियते। "कदळवकुळजम्बूपूगमाकन्दकण्ठद्वयससरस-नीरामन्तरा सह्यकन्याम्" इति पराशराणां मनोहरः भावः तेषां प्रकृतिप्रियत्वं प्रकृतिपरीक्षणञ्च प्रकटयति। नेदं सिंहलादिवत् सागरमन्तरा द्वीपम्। किन्तु नदीमन्तरा। कृष्णागोदवरीमध्यवर्तिनां द्वीपानां लङ्केति नाम। सूरिबृन्दवन्नमस्कारमिदं तरुवृन्दम्। तद्विशिष्टमञ्जीपञ्च। समुद्रान्तरीपवासी विभीषणो रङ्गराजस्य कावेरीद्वीपवासमेव भोग्यं मेने। षड्विंशतितमे श्लोकेऽत्यद्भुतं भावं प्रकटयति।

'यद्विष्णोः पदमतः परो रजोऽग्र्यं मुक्तानामनुविरजं विदीप्रमाहुः।
तत्पुण्यं पुलिनमिदं तयाऽद्यमध्ये कावेरी स्फुरति तदीक्षिषीय नित्यम्।।'

अम्बुदौघभ्रमकरतरुवृन्दमन्तरीपमित्युक्तम्। निश्शेषाविद्यानिवृत्तिस्थलं परमपदमिति श्रूयते। श्रीवैकुण्ठभिन्नमिदं द्वीपम्। परमपदवर्णनं क्रियते तद्भिन्नस्य द्वीपस्य प्रशस्त्यै। तदभेदताद्रूप्यं च। "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः", (कठ. ३-९), "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति श्रौतपुरोवादप्रसिद्धिमनुश्रुत्यात्र यच्छब्दोपनिबद्धः प्रसिद्धवदनुवादः। आश्चर्यम्। विरजायास्समीपे तमोगुणरहितं रजसः

परम् अग्र्यं यद्विष्णोः पदं स्थानं मुक्तानां भक्त्यादिना संसरतो मुक्तानां विशेषेण प्रकाशमानमाहुः पुण्यं तत्पुलिनं अद्य इदंतया कावेर्याः मध्ये प्रकाशते। तत्कावेरीमध्यं नित्यमीक्षिषीयेति वदन्ति। अतः मांसचक्षुषाऽपि पुरोवर्तित्वेन घटपटादिवत् वीक्ष्यं भवति। "सदा पश्यन्ति सूरयः" इति वेदोक्तमेतदहं नित्यं पश्येयमिति स्तुवन्ति। श्रीपराशरभट्टार्याणां दिव्याभिलाषां पुनः एवंरीत्या प्रकटयन्ति। श्लोकोऽयं श्रीभट्टार्याणां कावेर्याः गाढानुबन्धं व्यनक्ति -

'त्रय्यन्तप्रहतिमतीषु वैष्णवानां प्राप्यासुप्रचुरभवश्रमापहासु।
कावेरीपरिचरितासु पावनीषु श्रीरङ्गोपवनतटीषु वर्तिषीय।।'

द्रविडदेशद्रष्टारः दिव्यसूरयः श्रीवैकुण्ठात्परं कावेरीमध्यं श्रीरङ्गनाथनित्यकैङ्कर्यमेव यथाऽभिलषितवन्तः तद्वत् श्रीपराशरा अपि दिव्यसूरिमार्गमनुसरन्तः इमां विरजां कावेरीं वारं वारं स्तुवन्ति। कावेरीतीरे श्रीरङ्गमहाक्षेत्रं विराजते। एतत्क्षेत्रं प्रति "आध्यात्मिकाधिभौतिकाधिदैविकदुःखविघ्नगन्धरहितस्त्वं ... यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्व" इति श्रीमद्रमानुजाचार्याणां शरणागतिगद्यमुद्घोषति किल। अतः श्रीरङ्गे नित्यवसतिं कावेरीसुलभावगाहनञ्च सदाऽभिलषन्ति स्म। "श्रीरङ्गे शरदश्शतं सहस्रसुहृद्वर्गेण निष्कण्टकम्" इति श्रीगुणरत्नकोशस्तोत्रान्ते विज्ञापयामासुः। एमेव स्वकीये श्रीरङ्गनाथस्तोत्रे "कावेरीमध्यदेशे मृदुतलफणिराड्भोगपर्यङ्कभागे" इति। 'कदाऽहं कावेरीतटपरिसरे रङ्गनरे शयानम्...।

'उपासीनः क्रोशन् मधुमथन नारायण हरे।
मुरारे गोविन्देत्यनिशमनुनेष्यामि दिवसान् ।।"

इति तृतीये श्लोके। तथैव "कदाहं कावेरीविमलसलिले वीतकलुषो भवेयमिति' चतुर्थे प्रार्थितवन्तः। श्रीरङ्गनाथस्मरणमनुपदं यथा कावेरी स्फुरति तद्वत् श्रीरङ्गनाथकावेर्योः स्मरणानुपदं श्रीपराशराः स्पुरन्ति इत्यत्राहो श्रीपराशराणां कावेरीनद्या गाढानुभवः गाढानुबन्धश्च। श्रीदेवराजगुरुभिः विरचितायां पूर्वदिनचर्यायां प्रथमश्लोकमास्वादयन्तु -

'अङ्के कवेरकन्यायास्तुङ्गे भुवनमङ्गळे।

रङ्गे धाम्नि सुखासीनं वन्दे वरवरं मुनिम्।।'

इत्यत्र सर्वोत्कृष्टे निरतिशये भुवनमङ्गळे कावेर्याः उत्सङ्गे रङ्गे धाम्नि (यस्माद्रतिं गतो विष्णुः) इत्युक्तरीत्या दम्पत्यभिमतस्थाने सुखासीनं वरवरमुनिं प्रणमन्ति। गतश्लोके अत्र कावेर्याः वैभवः प्रकाशितः। एवं श्रीरङ्गराजस्तवे कावेरीवर्णनायुतस्तवः पूर्वाचार्य-श्रीसूक्तितरङ्गान् विकिरन् श्यामं वेदरहः श्रीरङ्गनाथं स्वपुलिनेषु व्यनक्ति। अत एव सम्प्रदायनिष्ठाः "तिरुक्कावेरीतीर्थम्" इति मन्त्रपूतं जलं प्रथमं देवार्चने सम्पादयन्ति। श्रीपराशरभट्टार्या अपि वर्तिषीय इति क्रियापदेन नास्मात् स्थानात् स्थान्तरमियामिति प्रणवाभिन्नरङ्ग-विमानसामीप्यपावनत्वादिगुणगणमण्डितं प्रार्थयन्ति।

**श्रीरङ्गारामभूमेः स्तवः -**

रतिं गतो यस्मात् तस्मात् रङ्गमित्यभिधीयते इति भगवतः निरतिशयां रीतिं गमयतीति रङ्गशब्दस्य आर्षं निर्वचनम् । रज्यतेऽस्मिन् सर्वे सामाजिकाः इति रङ्गम्। तदध्यक्षीक्रियते तत्स्थवृक्षमनुष्याणां रतिकरत्वप्रदर्शनेन तत्रस्थान् सुकृतविशेषान् तरून् दृष्ट्वा द्रष्टॄणां हर्षो भवेदेव। श्रीरङ्गारामभूमेर्भवश्रमभीतभागवत-प्राप्यानुगुणाभोग्यतामत्र वदन्ति।

'स्फुरितशफरदीर्यन्नारिकेळीगुळुच्छ-
प्रसृमरमधुकुल्या वर्धितानोहकानि।
रतिमविरति रङ्गारामरम्यस्थलानि
क्रमुकपनसमोचामेचकानि क्रियासुः।।'

कनकसरिति शफराणां नाम कनकवर्णमत्स्यानां बाहुल्यं विद्यते। ते स्वाभाविकहर्षेणोत्पतन्ति तदुद्वर्तने कनकस्यैव। स्फुरणं सहजमेव । तत्रस्थनारिकेळीस्तबकाः दीर्यन्ते अतिपेलवाः कोमलाबालनारिकेळी स्तबकाः दीर्यमाणस्तबकान्मधुधारा गलन्ति, ताः तीरवृक्षमूला-न्यापूरयन्ति। मधुसेकेन तरवो वर्ध्यन्ते। यथा राजा तथा प्रजाः इति न्यायानुसारं समरकतशिलामेचकः तथा तदुपवनवृक्षाः क्षेत्रमेचकितं भवत्यधिष्टातृदैवतवत्। मोचाः कदल्यः। 'श्यामायमानानि दिगन्तराणि'

इति कालिदासरघुंशवर्णनानुगुणं अत्र रङ्गप्रदेशा श्यामायन्ते इति स्मरणीयं भवति। श्रीरङ्गराजः स्वारामभूतेषु प्रदेशेषु स्वाभिन्नोत्सव-मूर्तिरूपेण विहरत्युत्सवान् रचयन्, ततो रम्याणि श्रीरङ्गारामस्थलानि इत्यत्र नास्ति सन्देहः। तानि दासजननामपि अविरतरतिं क्रियासुः इति वदन्तः आरामस्य विरामो माभूदिति रङ्गस्थलानि ममाविरतां रतिं विदधतामिति यथा रङ्गराजस्य रतिं करोति रङ्गं तदस्माकं रतिप्रदं भूयादिति यथा राज्ञे तथा प्रजाभ्यः इति श्रीपराशराः चमत्कुर्वन्ति। तानि स्थलानि नमस्कुर्वन्ति च।

**श्रीरङ्गदिव्यनगरस्तवः-**

श्रीरङ्गदिव्यनगरं श्लोकत्रयेण स्तुवन्ति। तत्र एकोनत्रिंशतितमे श्लोके-

'अधिपरमपदं पुरीमयोध्यममृतवृताऽमपराजितामुशन्ति।
पुळिनमुपरि रङ्गराजधानी पिशितदृशामपि सा पुरश्चकास्ति।।'

'यो वैतां ब्रह्मणो वेद अमृतेनावृतां पुरीम्' इत्युक्तश्रुतिप्रकारेण अमृतमयेन विरजाजलेनावृतां यद्वा जात्येकवचनं कृत्वा अमृतैः। नित्युमुक्तैरावृताम् अपराजितामयोध्यां देवानापूरयोध्येत्यभिधानां (यजुरार, १-२७) च पुरीमुशन्ति। सा रंङ्गराजधानी पिशितदृशामपि पुरः चकास्ति । नित्यमुक्तदर्शनीयं श्रीवैकुण्ठनगरमेव श्रीङ्गनगर-तयाऽवतीर्य मांसचक्षुषामपि साक्षात्कारं भवतीति श्रीपराशराः श्रीरङ्गं स्तुवन्ति । पिशिताशनेन्द्रप्रतिष्ठिता पुरी पिशितदृशां चकास्ते इत्यपि शब्दसारस्वात् परमपदवासिभिरप्यनुभाव्यतां द्योतयन्ति।अनन्तरे श्लोके -

'भवपदमपि .................... रङ्गराजधानी।।' इति

संसारस्थानमपि लीलाविभूतिमपि अप्राकृतस्थानं परमपदं कर्तुमिव भवपदपरमपदाख्ये द्वये सङ्घटिता हर्म्याणां माला, मणितलैः विजृम्भमाणा लीलाविभूत्यां जयतितरामिति, श्रीरङ्गनगर्यामत्युन्नतानि हर्म्याण्यनेकतलवन्ति भवनानि च मूलप्रदेशेन लीलाविभूतिमग्रप्रदेशेन नित्यविभूतिं च स्पृशन्तीति, उभयपदसम्बन्धप्रचुरतां स्थापयन्ति। अथैकत्रिंशतितमे -

'मणिमकररुची.................. चकासती नः।।'

मणिमकरकान्तयश्चान्द्रहरिणग्रहणार्थं वितता पाशा इवेति रूप्यन्ते। रङ्गराजधानीत्युक्तम् । तत्र ध्वजादिकं प्रदर्शनीयं भवति। ध्वजाश्च चन्द्रमण्डलं स्पृशन्तीत् वदन्ति। श्रीरङ्गराजः साक्षात्. मन्मथमन्मथः किल। तस्य नगरमिदं श्रीरङ्गम्। अत एव युक्तमत्र मकरालङ्कृत-ध्वजस्तम्भस्थापनमिति ते च ध्वजाः करा इव भवन्तीति करधृतपाशा इव भवन्ति मणिमकररुचयः इति वर्णयन्तः श्रियः राज्ञ्याः श्रीरङ्गनायक्या नवनवक्रीडाकौतुकाय ग्रहीतुमिच्छुरिव शोभमान-रङ्गपुरी दासजनान् सुखितान् करोतु इति स्वकीयभोग्यतातिशय-निर्वेशवतः करोतु इति स्तुवन्ति स्म।

**श्रीरङ्गनगरपरिपालकानां कुमुदादीनां स्तवः -**

अथ श्रीरङ्गनगरपरिपालनकृतः कुमुदकुमुदाक्षपुण्डरीक-वामनशङ्खकर्णसर्पनेत्रसुमुखसुप्रतिष्ठितनाम्नो गणाधिपतीन् द्वात्रिंशति श्लोके --

'जनपदसरिदन्तरीपपुष्यत्पुरपरिपालननित्यजागरूकान्।
प्रहरणपरिवारन्वाहनाढ्यान् कुमुदमुखान् गणनायकान्नमामि।।'

इति जनपदं कावेरीद्वीपं तत्र वर्धमानं श्रीरङ्गनगरं . तस्य परितो नित्यजारूकान् अतीव सावधानान् प्रहरणैः परिजनैः सम्पन्नान् परिपालनतत्परान् कुमुदादीन् विष्वक्सेनादीन् नमामीति वदन्तः श्रीरङ्गनगरवासिनां भागवतजनानामिष्टप्राप्त्यनिष्ठनिवृत्तिरूपपरिपाल-नाधिकृतत्वात्। तेषां त एवोपास्या इति सूचयन्ति। अथ नित्यमुक्त-मुमुक्षवः श्रीरङ्गे मनुष्यतिर्यक्स्थावररूपेण कैङ्कर्यं कुर्वन्तीति तेऽपि श्रीवैष्णवैः उपास्याः इति ज्ञापयन्तः श्रीपराशरार्याः स्वतो दासभूताः स्वयं दास्यमुपागताः नित्याः, नित्यदासाः सूरयः स्रस्तबन्धाः विमलचरमदेहाः मुमुक्षवः येषामिदं जन्म चरमजन्म। एते नित्याः मुक्ताः मुमुक्षवः, मनुष्यभावेन तिर्यग्भावेन स्थावरभावेन चात्र मिलिताः निर्बन्धलेशं विना नियमेन स्वयं प्रीत्या रङ्गधामाश्रयन्तेति तेभ्यो नम इति विनयं प्रकटयन्तः पराशराः न केवलमेतान्नित्यसूर्यादीन् नमामि। नित्यसूरयोऽत्र मनुजतिर्यक्स्थावरत्वेनास्थाय परिचरन्तीति, ये एतद्रहस्यं

प्राचीकशंस्तानपि इति त्रयस्त्रिंशति अह्रतसहजदास्या सूरयः स्रस्तबन्धाः श्लोके प्रणेमुः। तदनु चतुस्त्रिंशतिश्लोके अत्यन्तमुत्तुङ्गगोपुरवृन्दयुक्त-सप्तप्राकारपरीतं श्रीरङ्गमन्दिरं स्तुवन्ति-

श्रीरङ्गमन्दिरस्तवः -

'श्रीरङ्गदिव्यनगरं भुवि गोपुराणां प्राकारितेन निकरेण गरुत्मतेन।
पार्श्वप्रसारितपतत्रपुटेन भक्त्या नानातनूभिरुपगूढमुपघ्नयामः।।'

इत्यस्मिन् श्लोके गोपुरा गरुत्मन्त इव गोपुरोभयपार्श्वप्राकारौ तत्पक्षाविव गरुत्मानेव शरीरपरिग्रहेण गोपुरनिकरत्वेनावतिष्ठतेति वेदात्मा गरुडः इति प्रणवः श्रीरङ्गमिति वेदवेष्टितः. प्रणव एवेति वेदशृङ्गं श्रीरङ्गमेवेति वदन्तः नानातनूभिरुपगूढं श्रीरङ्गदिव्यभवनं भगवान् गरुडः "स एकधा भवति द्विधा भवति त्रिधा भवति" (छा. ७-२६-१) इति श्रुत्यनुगुणमनेकशरीराणि परिगृह्य श्रीरङ्गनाथतयावतीर्ण-परमपदनाथपरिपालनाय स्वयमेव भुवि प्राकारगोपुरनिकरात्मनाव-ततारेति श्रीरङ्गमन्दिरं प्रणमन्ति । गरुत्मान् परमपदादागत्य रङ्गमुपगूहतीति कथनानन्तरं श्रीपराशराः "प्राकारमध्याजिर-मण्टपोक्त्या" इत्यस्मिन् पञ्चत्रिंशतिश्लोके विश्वम्भरा भगवत्प्रेयसी प्राकारमध्याजिरमण्डपत्वेनावतिष्ठते रङ्गविमानसेवायै इत्युच्यते । यतो हि सप्तद्वीपा वसुमती सप्तार्णववती रत्नवती सशैला भूदेवी सप्तप्रकाररूपा प्रकारमध्यसप्ताजिरूपेण तत्रापि शिलामण्टपवती प्राकारवरणानीव विराजते । भगवन्तः यामुनार्याः दशोत्तराण्यावरणानि यानि चेति सूचितवन्तः किल। प्रकारमध्याजिराणि रत्नाकरास्थावर इव विचित्रशिला मण्टपारत्नशैला इव साजिराश्चतुर्दशावरणानि श्रीरङ्गं च द्वीपमध्यस्थं चकास्तीति सद्वीपत्वं निरूपितं भवति। परमपदानुभवस्य स्वस्याः प्राप्तत्वेऽपि तद्विश्लेषञ्च सोढुं समर्थैव, तथापि यदा परमपदमत्रायतं तत्सेवां साभिलषे देवेति रङ्गविमानस्य कायिकसेवां प्राप्तेव भगवती भूदेवी विभाति रङ्गमन्दिरत्वेन प्रकाशत इति कृत्वा तां नेमुः।

**श्रीपरकालकवेः (तिरुमङ्गैयाळ्वार्)-स्तवः -**

अथ षट्त्रिंशतितमे श्लोके -

'जितबाह्यजिनादिमणिप्रतिमाऽपि वैदिकयन्निव रङ्गपुरे।
मणिमण्टपविप्रगणान् विदधे परकालकविः प्रणमे महितान्।।'

३६ अस्मिन् श्लोके महाभागवतशिखामणेः परकालमहाकवेः कैङ्कर्यसौभाग्यं सूचयन्ति। वेदात्मनः गुरुडस्य भूदेव्याश्च श्रीरङ्ग-परिचरणं जगदुः । इदानीं परकालकविपरिचरणमुद्घोषयन्ति। यतो हि पूर्वं श्रीमान् परकालमुनिर्हिरण्मयबुद्धप्रतिमामपहृत्य श्रीरङ्गमन्दिरे गोपुरप्राकारमण्टपादिमकरोदिति प्रसिद्धिमभिप्राययन् तान् प्रणमन्ति स्म। परकालेति तन्नामान्वर्थीक्रियते, तेन बाह्यादिपरान् जिनादीन् वैदिकीकृत्य, गरुडः स्वयं गोपुरप्राकारादिः बभूव। भूमिश्च द्वीपाजिरादि बभूव। परकालो मण्टपवप्रादीन् निर्ममे। श्रीपराशरभट्टार्याः श्रीरङ्गमहाप्राकारनिर्माणदक्षाणां तिरुमङ्गैयैळ्वार् परकालसूरिणां स्मरणं स्वरङ्गराजस्तवे शोभावहं समुचितं भवेद्येवेति मत्वास्य दिव्यसूरिणः नामस्मरणमकार्षुः। यतो हि श्रीरङ्गमहाक्षेत्र-मोङ्कारमहाक्षेत्रत्वात् अवैदिका अप्यत्र वैदिका भवन्ति। जैनादिबहवो वेदबाह्याः परकालकविना जिताः। तत्प्रतिमाः परकालनिर्मितमण्टपेषु निवेशिताः जिनो जयशीलः इति तेषामुद्घोषः। जिनस्य जितत्व-माश्चर्यमेव। तेऽप्यूर्ध्वपुण्ड्रधारिणः शङ्खचक्रादिलाञ्छनाः दृश्यन्ते । तेऽपि वैदिकीभूता इव वैदिकीभूतजिनादिप्रतिमापरामर्शः विहितः। एवंभूतमहासाहसिकं चतुष्कविशिखामणिं प्रणमेमुः। श्रीपराशरार्याणां वेदान्तिना महापण्डितेन प्रवृत्ते वादपरिश्रमे परकालकवितल्लजस्य तिरुनेडुन्दाण्डकं नाम महाप्रबन्धं मार्गदर्शको बभूव। अयं श्लोकः कृतज्ञतापूर्णः भवति, स्वस्य एवमेव श्रीरङ्गनाथस्यापि चेति कृत्वा श्रीपराशरा अत्र प्रणमन्ति।

**द्वारचतुष्टयाधिकारिणां स्तवः-**

अथ सप्तत्रिंशतितमे श्लोके -- स्मेराननाक्षिकमलैः नमतः पुनानान् दंष्ट्रागदा भ्रुकुटिभिर्द्विषतो धुनानान्। चण्डप्रचण्डमुखतः चतसृषु

रङ्गद्वारावलीषु अधिकारभाजः प्रणमन्ति। इत्थं भगवद्भागवतद्वेषिणो जनान् उद्वेजयन्तः चण्डप्रचण्डमुखान् प्रणमन्ति। चण्डप्रचण्डौ प्राग्द्वारे याम्ये भद्रसुभद्रकौ पश्चिमे जयविजयावुदग्धातृविधातृकावेति। प्रणामश्लोकः अनुसन्धेयः भवति। देवालयप्रवेशसमये द्वारपालकौ प्रणम्य गन्तव्य इति सम्प्रदायश्च सूचितः।

**सहस्रस्थूणास्थानरत्नावास्थानस्तवः -**

श्रीरङ्गस्य प्राग्गोपुरद्वारा अन्तःप्रवेशे सहस्रस्थूणामण्टपो दृष्टिगोचरो भवति। नायं मण्टपः स्थूणामयः नाममात्रमस्य सहस्रस्थूणमण्टपेति शतगुणितोत्तरक्रमेणानन्दमयस्य निरवधिकानन्दत्वं लक्षितं श्रुत्या। स्थूणमय इवायं मण्टपश्चर्मचक्षुषाम्। अत्र अद्यापि स्थूणाः सहस्र-सङ्ख्यापि परिच्छेदवन्तः। नाथगोष्ठीदर्शनजन्यानन्दस्य सङ्ख्यातीतत्वं निरवधिकत्वञ्चेति प्रतिपादयन्ति। आस्थानमानन्दमयं सहस्रस्थूणाः नाम्ना तदवाप्तवानि। परमपदमण्टपेनैतल्लक्ष्यं भवति। प्रसिद्धेन ज्ञातेना-प्रसिद्धस्य बोधनं न्याय्यम्। अस्य मण्टपस्यानन्दमयत्वाकारो लक्ष्यते। तत्प्रसिद्धं सहस्रस्थूणास्थानात्मश्रीवैकुण्ठस्थानन्दमयश्रीमहामणिमण्टप-मवततारेति कृत्वा प्रणेमुः । ब्रह्मलोकमभिसम्भवानि इतिवत् भट्टार्याणामभिप्रायः। वेदान्ताचार्यैश्च श्लोकोऽयं स्वीयभाष्ये उदाहृतः।

**चन्द्रपुष्करिण्याः स्तवः-**

शीतदप्रदेश इव ब्रह्मप्रवेशः। श्रीरङ्गमहामन्दिरे चन्द्रपुष्करिणी निरुपमानसौन्दर्येण विराजते। इयं न केवलं तापत्रयतप्तास्मच्छ्रमहारा, किन्तु सर्वतापातीतसमस्तजनतापहरशीततं दिव्यमिथुनस्यापि श्रमहरेति चारु प्रादर्श्यते। "पुष्करिणी" इति नाम्ना पद्मसम्भवो नियतः भवति । नाथगोष्ठी अनुभवानन्तरं भगवान् श्रीरङ्गनाथः सर्वदा योगिहृध्यानगम्य इति निगमागमा प्रपञ्चिताः। आश्रितहृदयकुहरेषु सदा विराजमानत्वात् भगवानपि तृप्तः भवत्येव। अतः मुनिमनःपद्मसद्मसु श्रममपि दूरीकर्तुमिव, एवमेव महालक्ष्म्या सार्धं जलक्रीडाविलासलीलातपत्र-परिष्क्रिया विनिमयविधासूनासूनक्रियासफलोत्फलां श्रमहरतटीं ऐन्दवीमरविन्दिनीं शरणं भजाम इति स्तुवन्ति। कुमुदान्येव शशाङ्कः

इति चन्द्रसरसि उत्पलानां सद्भावो युक्तः। परन्तु श्रीपराशराः पद्मान्यप्यत्र भवतीति वर्णयन्ति स्म। भगवत्सन्निधौ सहजविरोधिनां विरोधविश्रान्तिः भवेत्येव ननु। दिव्यमिथुनस्य श्रीरङ्गनायकस्य विहरणश्रमहरणमत्र चन्द्रपुष्करिण्यां सम्पादितम्। भगवान् शशाङ्कः अपि श्रीरङ्गदिव्यारामशोभिनि चन्द्रपुष्करिणीतीर्थे प्रतिनित्यं परिचयातिशयात् अघमर्षणस्नानं कृत्वा कृत्वामृतांशुत्वमवाप । चन्द्रो राजयक्ष्मोपशान्तये चन्द्रपुष्करिण्यामघमर्षणस्नानविधानेन तथाविधव्याधि-विमुक्तः सुधांशुत्वमवापेति पौराणिकी प्रसिद्धिरत्राभिप्रेता। इमां पौराणिकीं कथां मनसि निधाय श्रीपराशराः स्वयमपि

'तापत्रयीमैन्दवपुष्करिण्यां निमज्य निर्वापयितास्मि यस्याः।
अभ्यासतो पापमघर्षिणीनां चन्द्रस्सुधादिधीतितामवाप।।'

आध्यात्मिकाधिदैविकाधिभौतिकाख्यतापत्रयमुपशमयिता भवामीति सांसारिकक्लेशं निवर्तयितुरस्मीति स्तुवन्ति स्म। श्रीरङ्गविमानोपरि वर्षमाणाः जलधाराः चन्द्रपुष्करिण्यां समापतन्ति। अतः विमानमभिषेकं जलमिदं चन्द्रपुष्करिणीस्थं जलमिति विशेषः।

इत्थं श्रीपराशराः मुनिमनःपद्मेषु पुष्करिण्यां च नाथविहार-मुपवर्णिताः । तापत्रयतप्तानां चेतनानां पद्मिनीमञ्जनमुचितम्, किन्तु नाथस्यापि श्रीरङ्गस्य पराङ्कुशपरकालादिदिव्यसूरिशीताशयमज्जनं प्रतिपादयन्ति। एकचत्वारिंशतितमेश्लोके कामप्यनिर्वचनीयां भावपरम्परामाविष्कुर्वन्ति भट्टपादाः।

'पूर्वेण तां तद्वदुदारनिम्ना प्रसन्नशीताशयमग्ननाथाः।
पराङ्कुशाद्याः प्रथमे पुमांसो निषेदिवांसो दशमां दयेरन्।।'

इति स्तोत्रं कुर्वन्ति स्म। श्रीचन्द्रपुष्करिणीप्रग्देशप्रतिष्ठितान् प्राचार्यान् मुनिमनः पद्मेष्वित्यत्र प्रस्तुतान् श्रीपराङ्कुशादीन् दशापि दयाभ्युत्थानाय प्रार्थयन्ते। यथा चन्द्रपुष्करिणी उदारनिम्नशीतांशयत्वं भजते तद्वत् सत्पुरुषाशयं भवतीति उपमानोपमेयभावस्य परस्परं सम्भावितत्व-द्योतनाय तद्वदिति वदन्ति। श्रीचन्द्रपुष्करिण्यामिव श्रीमत्पराङ्कुश-परकालादिहृदये लीलारसमनुभवतीति वदन्तः दशसंख्याकाः

पराङ्कुशाद्याः[1] प्रथमे पुमांसः पूर्वे पुरुषाः पूर्वाचार्याः मां ा विदधीरन्निति सर्वोत्तारकनिर्हेतुकनिरवधिकपरमकृपावतः श्रियःपतेः तदाशयान्तरावगाढत्वादशरण्यानामस्माकं शरण्यभूता तदीया दयैवेति श्रीमतां भट्टपादानां दृढाभिप्रायः।

**श्रीरङ्गदिव्यविमानस्तवः-**

श्रीपराशरभट्टार्याः श्रीरङ्गविमानानुभवं कटाक्षयन्ति। स्वाधिष्ठिते विश्वेऽस्मिन् भगवान् प्रतिष्ठितः। भगवच्छक्त्या धृता प्रकृतिः। प्रकृतिमण्डलं कूर्मे प्रतिष्ठति। कूर्मे शेषः। तत्फणासु पृथिवी। तस्यां समुद्रः। अष्टदळपद्मम्। तस्मिन्प्रतिष्ठितं विमानमिति क्रमः प्रदर्श्यते। 'आधारशक्तिमुपरि प्रकृतिं परेण ... श्रीरङ्गधामासु निविष्टमभिष्टवानि।।'४३।। इति विमानचित्रणं चित्रं विरचयति। अथ त्रिचत्वारिंशतितमे श्लोके

> 'परेणनाकं पुरि हेममय्यां यो ब्रह्मकोशोऽस्त्यपराजिताख्यः।
> श्रीरङ्गनाम्ना तमपौरुषेयं विमानराजं भुवि भावयामि।।'

प्रकृतिं परेणेत्याद्युक्तम्। नाकं परेण स्थिता पूरुच्यते। अत्र परमपदस्य पुर्या रङ्गविमानस्योपलक्षणम्। श्रीरङ्गविमानं तावत् ब्रह्मकोशः, ओङ्कार एव। ब्रह्मणः कोशोऽसि मेधया पिहितः (तैत्तिरीये) इति समामनन्ति खलु। वेदः तस्मात् कोशात् उद्ध्रीयते। अन्ते च तस्मिन् न्यस्यते। कोश इव ब्रह्मणः वेदस्य ओङ्कारः भवति। ब्रह्मणोऽपि ओङ्कारमायतनम्। श्रीरङ्गविमानञ्च प्रणवाभिन्नम्। अस्मिन् श्लोके भट्टपादाः अयोध्या अपराजितेति नास्याः कालादिना पराजय इति नाममात्रभेदः न वस्तुभेद इति, स एव विमानराजोऽत्रानुभूयत इति सदा पश्यन्ति सूरयः परमेपदे। किन्तु भुवि वयं दासजनाः निरन्तरं भावयाम

---

1 १. पोय्गैयाळ्वार् २.पूदत्ताळ्वार् ३. पेयैळ्वार् ४. तिरुमळिशैयाळ्वार् ५.नम्माळ्वार् ६.कुलशेखराळ्वार् ७. पेरियाळ्वार् ८. श्री आण्डाळ् ९. तोण्डरडिप्पोडियाळ्वार् १०. तिरुप्पाण्णियाळ्वार् ११. तिरुमङ्गैयाळ्वार्। स उत्तमः पुरुषः इति परमसाम्यापन्नाः निरञ्जना मां भगवते रोचयेरन्। इमे दशावताराः मां भगवदनुभवसागरे अवतारयेयुः इत्याशयः।।

इति संभाषन्ते । विमानवर्णने द्वितीये श्लोके श्रीवैकुण्ठविमानस्यैव सर्वसमाश्रयणीयत्वात् श्रीरङ्गविमानतया अवतीर्णत्वात् इदमेव आश्रयणीयं भोग्यं च भवतीति क्रमेण श्लोकद्वयेन प्रणमन्ति।

'अनाद्याम्नातत्वात् पुरुषरचनादोषरहितं
नैतांस्तान् कामान् विदधदपि सायुज्यहृदयम्।
असन्देहाध्यासं भगवदुपलम्भस्थलममी
प्रतीम श्रीरङ्गं श्रुतिशतसमानर्धिशरणम्।।'

श्रीपराशरार्याः श्रीरङ्गविमानस्य वेदरूपसाम्यं मनोहररूपेण प्रतिपाद्य प्रणमन्ति स्म। यथा अनाद्याम्नातत्वात् पुरुषरचना दोषरहितमिति वेदस्य सर्वे जानन्ति। श्रीरङ्गविमानमपि स्वयं व्यक्तत्वात् मानवनिर्मितेषु परिदृश्यमानरचनादोषः नास्त्येव। यथा वेदः प्रजाकाम-पशुकामान्न-कामस्वर्गकामलोलुपानांतत्तत्कामपूरणरूपानुग्रहः प्रसादयन्नेव मोक्षाख्यं पुरुषार्थं प्रसादयति तद्वत् श्रीरङ्गविमानमपि स्वाश्रितेभ्यः वाञ्छितार्थान् नश्वरानपि प्रसादयन् मोक्षमेवान्तेऽनुगृह्णात्येवेति साधयन्ति स्म। असन्देहाध्यासं भगवदुपलम्भस्थलं यथा वेदे तद्वत् लोके श्रीरङ्गविमानमिति श्रुतिसमानार्धि भवतीति तं रङ्गविमानं दासजनाः वयं शरणमुपगमाम इति विशदीकुर्वन्ति स्म। अथ पञ्चचत्वारिंशतितमे शलोके भगवान् शेष एव सकलविधकैङ्कर्यं कर्तुं श्रीरङ्गविमान-मभवदिति, स च शेषः श्वेतवर्णोऽपि स्वस्मिन् शयानस्य शरीरकान्त्या श्यामायमानः सकलजलधिपानजीमूत इव विराजत इति तच्च "पुळकयति विमानं पावनं लोचने नः"इति लोचने सञ्जातपुळके करोति, नीलिमा शैत्यं सौकुमार्यमिति सर्वं नेत्ररञ्जकं भवतीति स्तुवन्ति स्म।

**श्रीरङ्गविमानान्तरोत्तरभागगोपुरशिखरोपरिविराजमाननृसिंहस्तुतिः -**

व्यापिरूपमपि गोष्पदयित्वा भक्तवत्सलतयोज्झितवेलम्।
तद्विषन्तपनृकेसरिरूपं गोपुरोपरि विजृम्भितमीडे।। ४६ ।।

इति षट्चत्वारिंशतितमे श्लोके मेट्टळगियशिङ्गर इति प्रसिद्धिमुपगतं नृसिंहदेवं स्तोतुकामाः तं च देवं व्यापिरूपमपि गोष्पदयित्वा भागवतस्य प्रह्लादबालकस्यानुग्रहाय उज्झितनियमः तत्क्षणाविर्भूतः नृसिंहदेवः

गोपुरशिखरोपरि विराजमानः वात्सल्यभूयिष्ठः चकास्तीति । तस्मै देवाय प्रणमाम इति स्तुवन्ति स्म । अत्र हरिमीडे इति श्रीशङ्कर-भगवत्पादस्तोत्रस्फुरणं सिंहविषये ईड इति प्रयोगश्चारुतरः।
'अहमलमवलम्बस्सीदता मित्यजस्रं ... क्रमसुरभितमेकं ज्योतिरग्रे चकास्ति।।' इत्यनेन श्लोकेन सीदतां जनानाम् अहमलम् अवलम्ब इति ज्ञापयन्निव रङ्गधाम्नः गोपुरोपरि भागे अजस्रं निवसत् क्वचन नृपरिपाटीवासितं क्वापि 'भारूपः सर्वगन्धः' (छा. ३-१४-२) सिंहक्रमसुरभितं परंज्योतिः नयनयोः चकास्तीति स्तुतवन्तः अखण्डमिदं ज्योतिः इति, यद्यपि स्तम्भः खण्डितः यद्यपि स्वतनुरपि नरत्वसिंहत्वाभ्यां खण्डितेव स्वरूपमखण्डमेव अग्रे स्वां तनुं स्वयं विवृणुते इति प्रणमन्ति।

**श्रीभाष्यकारनित्यानुष्ठानपद्धत्यनुगुणगुरुपम्परास्तवः -**

भगवान् श्रीभाष्यकाराः श्रीरामानुजमुनिः "नित्यग्रन्थम्" इत्यस्मिन् ग्रन्थे पीठार्चनामनुगृह्य योगपीठस्य पश्चिमोत्तरभागे ओम् अस्मद्गुरुभ्यो नमः इति गन्धपुष्पधूपदीपैरभ्यर्च्य प्रणम्य अनुज्ञाप्य भगवद्यागमारभत इति सूचितवन्तः। तदनुसारेण श्लोकोऽयं प्रारभते श्रीपराशरैः "वेदं वल्लारर्गळैक्कण्डु विण्णोरपेरुमान् तिरुप्पादं पणिन्दु (तिरुवाय्मोळि ४-६-८) इति द्रविडाम्नायमनुसृत्य आचार्यान् पुरतो निधायैव भगवान् समाश्रयणीयः इति शिष्टाचारः भवति। तदनुगुणं पराशराचार्याः-

'संशोध्य पावनमनोहरदृष्टिपातैः
देवाय ममापि निवेदयितां गुरूणाम्।
सव्योत्तरे भगवतोऽस्य कटाक्षवीक्षा-
पङ्क्ति प्रपद्य परितः परितो भवेयम्।।'

पुनश्च तैर्मनोहरैर्भोग्यैश्च दृष्टिपातैः अनादिकलुषदूषिततया संशोधना-नर्हमपि मां संशोध्य श्रीरङ्गनाथाय परिपाल्यतया परिचरणानुगुणतया वा समर्पयतां स्तुत्यतया प्रकृतस्य भगवतः सव्योत्तरप्रदेशे विद्यमानानां गुरूणां कटाक्षवीक्षापङ्क्तिः शरण्यतया प्राप्य पुनः पुनः प्रदक्षिणगतिः

सञ्चरेयमिति प्रार्थयामासुः। अस्मिन् श्लोके "अशुद्धमपि मां" इति वाक्यं निवेदयत मां इति विभीषणोक्तिः स्मर्यते। अपीति तत्राभिप्रेतार्थ-विवरणम्। एवमेव देवशब्देन 'तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' (श्वे. ६-१८) इति श्रुतिस्मरणं भवत्येव।

**चन्द्रपुष्करिणीतीरप्ररूढपुन्नागानोकहश्रेष्ठस्तवः-**

श्रीपराशरभट्टाः न केवलं दिव्यायुधादीन् स्तुवन्ति, अपि तु श्रीरङ्गमन्दिरकैङ्कर्यं प्रत्यक्षेण परोक्षेण वा कुर्वतां चेतनाचेतनानपि वन्दन्ते । यतो हि ते च वृक्षादय अपि कैङ्कर्यसौभाग्यफलमुपलब्धा इति तावान् प्रेमातिशयः परितो भवनं वर्ण्यते अश्वत्थः सोमसवन इति परमपदे। अत्र पुन्नागो वर्ण्यते। नाश्वत्थः कुसुमदः। अयं तु -

'श्रीरङ्गराजकरनम्रितशाखिकाभ्यो
लक्ष्म्या स्वहस्तकलितश्रवणावतंसम्।
पुन्नागतल्लजमजस्रसहस्रगीति-
सेकोत्थदिव्यनिजसौरभमामनामः।।' ४८।।

अश्वत्थसमीपे। "अहमन्नमहमन्नम्" इत्यादिमुक्तगीतिर्भवेत्। अत्र द्रविडप्रबन्धसहस्रगीतिर्भवति, तद्गीत्यार्द्ररसेन सिच्यते। श्लोकोऽयं रसघनः सहृदयैकवेद्यः । शठकोपमहामुनेः दिव्यप्रबन्धपरीमळभूयिष्ठः। श्रीपराशरभट्टार्याणां शठकोपगाथासहस्रगीतिभक्तिं प्रकटयति। अत्र श्रीरङ्गनाथरङ्गनायक्योः विहारविशेषं स्तुवन्ति स्म। चन्द्रपुष्करिण्याः तीरजं पुन्नागतल्लजं बहुधा नमन्ति। यतः पूर्वाचार्याः अत्रैव पुन्नागवृक्षस्याधस्तात् उपविश्य वेदान्तार्थान् परस्परं बोधयन्तः तुष्यन्ति च रमन्ति स्म। एवं तरोरस्य च्छायायामेव श्रीशठकोपमहामुनेः सहस्रगीतिमहाप्रबन्धं सदाऽनुसन्धीयमानाः कालं गमयन्ति स्मेति प्रसिद्धिरस्ति। अत एव श्रीपराशराः स्वकीयश्रीरङ्गराजस्तवे तरुमेनं प्रीत्या स्तुवन्तः कमपि लीलाविहारं भगवतः रङ्गभर्तुः उपवर्णयन्ति स्म। तुङ्गस्तनभरनता लक्ष्मीः। भगवदपेक्षयौन्नत्यं न्यूनमेव च स्यात् स्वभावतः। तस्याः हस्तस्पर्शे जाते महद्दोहदं कृतं स्यात् वृक्षस्य। यदि रङ्गराजः स्वयमेव कुसुममपचिनुयात्तस्याः करस्पर्शो न स्यात्। इदानीं

द्वयोरपि करस्पर्शौ भवतः। अतः स्वकरेण भगवान् शाखां नम्रयति। सापि तां स्पृष्ट्वा पुष्पमपचिनुयादिति। प्रीतिं वो जनयन् यातः करस्पर्शेन माधव इति भगवत्करस्पर्शेनास्त्येव प्रीतिर्वृक्षस्य। द्विगुणा प्रीतिरुभयोः करस्पर्शे। अतः पुष्पावचये गन्धद्वारायाः तस्याः करस्पर्शः दिव्यपरीमलाधानं स्यात् । श्रीशठकोपमहामुनेः गाथासहस्र्याः आर्दता रसमयता परिमळवत्ता च सुप्रसिद्धा। तद्रंससेकेन वकुळसुमनो वासना धीयते। विचित्रमिदं पुन्नागवृक्षः वकुळसौरभविशिष्ठ इति। गाथासहस्रमामनन्ति अध्यापकाः (नालायिरग्रन्थपण्डिताः) । वयं पुन्नागतल्लजमामनामः आम्नायरससिक्तमामनामेति भागवतसम्बन्धं वृक्षं प्रणमन्तः नाथमिथुनलाभमत्र सुलभमिति सूचयन्ति स्म। श्रीरङ्गराजस्तवे श्लोकस्यास्य विशेषादरः सर्वैः प्रदर्श्यते। पूर्वाचार्यास्सर्वेऽपि पुन्नागमूलप्रदेशनिषण्णास्सन्तो द्रमिडोपनिषत्प्रवचनमकुर्वन्निति प्रसिद्धिः तत्त्वप्रवचनघोष एव सलिलसेकतया पर्यवस्यन् पुन्नागकुसुमानामप्राकृतसौरभमापादयतीति भावः। तादृशं पुन्नागाख्यतरुवरं स्तुमः इति स्वभक्तिं प्रदर्शयन्ति।

**श्रीमद्विष्वक्सेनस्तवः -**

गुरुपरम्परायां पूर्वं विष्वक्सेनवन्दनं कृतवन्तोऽपि श्रीमन्तः पराशरार्याः इदानीं श्रीरङ्गकैङ्कर्यदुरन्धरत्वेन विष्वक्सेनमहावैभवं प्रतिपादयन्ति। श्रीमति वैकुण्ठे विष्वक्सेनस्य महत्प्राधान्यं वर्तते। श्रीमहाविष्णोः सकलसैन्याध्यक्षः प्रियतमेष्वपि प्रियतमो भवति। गुरुपरम्परायां श्रीशठकोपमुनेरुपरि सेनेशोऽयं विराजते।

'अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते।
भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते।।' (श्री. रा २-३१-२५)

इति श्रीमद्रामायणश्लोकमनुसरन् श्रीरङ्गनायकदम्पत्योः सेवां कर्तुं विष्वक्सेन एव प्रभवेदपि प्रतिपादयन्ति स्म।

'श्रीरङ्गचन्द्रमसमिन्दिरया विहर्तुं
विन्यस्य विश्वचिदचिन्नयनाधिकारम्।
यो निर्वहत्यनिशमङ्गुळिमुद्रयैव

सेनान्यमन्यविमुखास्तमशिश्रियामः।।'

इत्यस्मिन् श्लोके ईश्वरभरो गुरुषु न्यस्यत इति गुर्वर्थं ज्ञापयन्ति भगवतः कृत्यं किमिति विचार्यमाणे चिदचिन्नयनमिति तच्च सेनेश्वरेण निरुह्यत इति वदन्तः श्रीरङ्गजनानानन्दकरं भगवन्तम् इन्दिरया सह विहर्तुं सिंहासने प्रतिष्ठाप्य समस्तस्य चिदचितः परिपालन-नियमनादिरूपमधिकारं तर्जन्युन्नमनरूपमुद्रयैव निर्वहतीति, स एव महात्मा विष्वक्सेन इति तं शरण्यान्तरपारङ्गमुखास्सन्तः समाश्रिता भवेम इति सश्रद्धं प्रणमन्ति स्म। अत्र भगवद्राजाचार्याणां श्रीवैकुण्ठगद्यस्थ वाक्यं स्मरणीयं भवति। यथा - "स्वसङ्कल्पमात्रा-वक्लुप्तजगज्जन्मस्थितिध्वंसादिके श्रीमति विष्वक्सेने न्यस्तसमस्ता-त्मैश्वर्यम्" इति एवमेवाचार्याश्रयणानन्तरमाचार्याण्याश्रयणं वदन्ति। "सैन्यधुरीणप्राणसहायां सूत्रवतीमाशिश्रियमम्बाम्" इति सेनापतेः पत्नी मम अम्बा भवति मातुर्गरीयस्याचार्याणी। शरीरमेव पितरौ जनयतः[1]। विष्वक्सेनस्य पत्नी सूत्रवती नाम्ना प्रसिद्धा। प्राणस्य तु वेदान्तग्रन्थेषु सूत्रत्वेन व्यवहारो दृष्टचर एव। भर्तृप्राणाः सूत्रवती। प्राणसहाया सूत्रवती भवति। अस्यार्दोर्लतायां लक्ष्मीपदसेवाकाले तल्लाक्षालाञ्छितं प्लोतमार्द्रवस्त्रं लतालम्बिवल्कलवद्विलसति। समस्तजनन्याः सेवानियुक्ता वेत्रवती मदम्बा भवति। भगवत्सेनापतेर्विष्वक्सेनस्य प्राणवत् सहायभूता भवति। तां विना तस्य विग्रहधारणमशक्यमिति वदन्तः तामाश्रितो भवेयमिति प्रणमन्ति। इत्थं श्रीमन्तं विष्वक्सेनं महिषीञ्च प्रणम्य तत्सेनापतीन् करिमुखादीन् सुखावहतयाह। "विदधतु सुखं विष्वक्सेनस्य ते प्रथमे भटाः" इत्यस्मिन् श्लोके सेनान्यो भटाः स्युः। चत्वारो भटाश्चतसृषु दिक्षु पालयन्तीति तेभ्यः शर्म प्रार्थ्यते। दिशि

---

1 'विष्वक्सेनं सकलविबुधप्रौढसैन्याधिनाथं
मुद्रा चक्रे करतलयुगे शङ्खदण्डौ दधानम्।
मेघश्यामं सुमणिमकुटं पीतवस्त्रं शुभाङ्गं
ध्यायेद्देवं विजितदनुजं सूत्रवत्या समेतम्।।'

श्लोकेऽयं श्रीवैष्णववैदिककर्मसु सर्वदा निर्विघ्नप्रार्थनतया तिष्ठति ।

दिशि दिवारात्रं श्रीरङ्गपालनकर्मठाः विष्वक्सेनस्य प्रथमे भटाः करिमुखजयत्सेनौ कालाह्वसिंहमुखौ चत्वारः अस्माकं सुखं वितन्वन्तु इति प्रार्थयन्ति। विघ्नायुतं सहजं गोविन्दभक्तानाम्। तद्भक्तिमाशंसमानानाम्। तद्विघ्नास्तूली भवन्ति। एते च दावानला भवन्तीति वदन्ति स्म। अत एव

'यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम्।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये।।'
(श्रीविष्णुसहस्रनामस्तोत्रपूर्वपीठिका)

इत्ययं प्रार्थनाश्लोकः युक्तरूपः भवत्येव।।

**गरुत्मतः स्तवः-**

इत्थं विष्वक्सेनप्रदक्षिणं कुर्वंस्तत्प्राकारमध्यवर्ति गोपुरस्य पुरतो भगवदग्रेऽवस्थितबृहद्रूपं गरुत्मन्तं स्तोतुकामाः श्रीपराशराः -

'श्रुतिमयमतिहर्षप्रश्रयस्मेरवक्त्रं
मणिमुकुरमिवाग्रे मङ्गळं रङ्गधाम्नः।
शरणमभिगतास्मो यत्र रूपस्वरूप
स्वगुणमहिमदर्शी मोदते रङ्गशायी।।'

(५३) इत्यस्मिन् श्लोके रङ्धाम्नः अग्रे मङ्गळकरं रत्नदर्पणमिवस्थितं श्रीरङ्गराजदिव्यमङ्गळविग्रहसौन्दर्यसौकुमार्यतारुण्यलावण्याद्यनुभवजनितहर्ष प्रकर्षेण विनयेन च विराजमानं तस्य च स्थितिः स्मेरदर्शनता भवतीति भावः। एवंभूतं श्रुतिमयं शरणमभिगता स्मः। यस्मिन् गरुत्मति दिव्यमङ्गळविग्रहः दिव्यात्मस्वरूपं ज्ञानशक्त्यादयो दिव्यात्मगुणाः सौन्दर्यादयो विग्रहगुणाश्च तेषां महिमानं पश्यतीति तथोक्तो रङ्गशायी मोदं प्राप्नोतीति तं वेदात्मानं दासजना वयं शरणं भजाम इति जगदुः । अत्र "तेनैव सह मोदते" इति प्रमाणवचनं स्मार्यते। अथ तत्पत्न्यौ रुदासुकीर्ती समाश्रयन्ति। "तार्क्ष्यपक्षतिवदस्य वल्लभां रुद्रया सह कीर्तिमर्चये।" इत्यस्मिन् श्लोके गरुडपत्न्यौ वन्द्येते। "पक्षौ प्राणसमौ पक्षिणः भवतः", "आनन्दमयपक्षिणः मोदो दक्षिणः पक्षः, प्रमोद उत्तरपक्षः" इति श्रुत्यनुगुणं पक्षतिसंख्या पत्नीसंख्या समानापक्षवद्वल्लभे

इमे पत्न्यौ। कमला एतत् द्वारार्थिनामानन्दबाष्पं कीर्तिं च कटाक्षयति। रुद्रयानन्दबाष्पं सुकीर्त्या कीर्तिं च। रुद्राभक्तेषु न दुःखाश्रुमती किन्त्वानन्दाश्रुमती तावत्प्रवाहयित्री च भवति। स्वकीयपादारविन्दाश्रितानां समस्तश्रेयःपदकटाक्षा लक्ष्मीः स्वचक्षुर्भूताभ्यां तस्यां हर्षबाष्पकीर्ती प्रददातीत्यर्थः। पक्षिराजस्य पक्षमूलमिव तार्क्ष्यस्य इष्टां पक्षतिवन्निरन्तरालिङ्गनार्हां उक्तविशेषणविशिष्टया रुद्रया सहाश्रयामीति नमश्चक्रुः।

**अत्यन्तान्तरङ्गभूतपञ्चायुधीस्तवः -**

श्रीमन्नारायणस्य पञ्चायुधाः सुदर्शन-पाञ्चजन्य-कौमोदकी-नन्दक-शार्ङ्नामानः दिव्यायुधाः भवन्ति।

‘स्वास्त्ररूपस्फुरन्मौळिमाशब्द इति
उद्धुनानां सुरांस्तर्जनी मुद्रया।
नाथनिद्रोचितोन्निद्रताम्रेक्षणां
सञ्चरन्तीं स्तुमस्तां च पञ्चायुधीम्।।’

इति श्लोकद्वारा श्रीरङ्गनाथसेवार्थमागत्य योगनिद्रासमये स्तुतिकलकलं कुर्वाणान् चतुर्मुखादीन् तर्जनीमुद्रया उद्धुनानान् श्रीरङ्गनाथस्य निद्रोचितोन्निद्रताम्रेक्षणाम् अस्थानेऽपि प्रेमान्ध्यनिबन्धनभयशङ्कया निरन्तरं परितः सञ्चरन्तीं प्रसिद्धां पञ्चायुधीं स्तोत्रविषयं कुर्मः। भगवद्विग्रहपरिपालनरूपपरिचर्यायां युष्मत्समा न केचिदपि परिजना इति हि तदीयस्तुतिः चकरेण स्वयं प्रवृत्ताया अपि तादृशी स्तुतिरधिकेति सूच्यते। इतः पूर्वं ‘सदा पञ्चायुधीं बिभ्रत्स नः श्रीरङ्गनायकः’ इति ३२ तमे श्लोके उक्तवन्तः। पुनः पञ्चायुधानां प्रस्तावः श्रीरङ्गनाथविषये श्रीपराशराणां प्रेमातिशयः व्यज्यते। यतो हि स्वाराध्य दैवतस्य श्रीरङ्गस्य रक्षां कुर्वन्तीति महानादरः। सर्वरक्षकस्यापि पञ्चायुधधारणं भक्तानां सन्देहनिवारणार्थमेव। अतः श्रीपराशराः पञ्चायुधीं बहुधा स्तुवन्ति स्म। तदनु आचार्याः पुनः अस्त्रग्रामाग्रेसरं सुदर्शनं प्रेमातिशयेन स्तोतुमुद्युक्ताः।

‘अस्त्रग्रामाग्रेसरं नाथवीक्षासीधुक्षीबोद्वेलनृत्ताभिरामम्।

चक्रं दैत्यच्छेदकल्माषिताङ्गं भ्राम्यज्ज्वालामालभारि प्रपद्ये।।' श्रीरङ्गनाथस्य आयुधेषु अग्रेसरः चक्रराजः भवति। सुदर्शनस्तु श्रीरङ्गनाथवीक्षासीधुक्षीबोद्वेलनृत्ताभिरामो भूत्वा दैत्यच्छेदकल्माषितदेहः ज्वालामालभारी भवति। तं सुदर्शनचक्रराजं नमामीति स्तुवन्ति स्म। श्रीरङ्गमहाक्षेत्रे रङ्गमन्दिरे पार्थक्येन चक्रराजस्यायतनं विद्यते। पराशराः सुदर्शनप्रियाश्च। प्रतिदिनं चक्रराजसन्निधिं सेवन्ते स्म। श्रीवैष्णवसम्प्रदाये चक्रराजस्य चक्रत्ताळ्वार् इति विशिष्टनाम्ना व्यवहारः विद्यते। पञ्चसंस्कारवेळायां प्रथमतया चक्रराजं

'सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ।
अज्ञानान्धस्य मे देव विष्णोर्मार्गं प्रदर्शय।।'

इति स्तुवन्ति। ततः दक्षिणभुजे तापमुद्रां स्वीकुर्वन्ति। सुदर्शनमाहात्म्यं अहिर्बुध्न्यसंहितायां विशेषरूपेणोपवर्णितम्। श्रीमन्तः श्रीकूरनारायणयतिप्रवराः सुदर्शनशतकमद्भुताद्भुतं रचयामासुः। तत्रादौ

'सौदर्शन्युज्जहाना दिशि विदिशि तिरस्स्वृत्यसावित्रमर्चिः
बाह्याबाह्यान्धकारक्षतजगदगदङ्कारभूम्ना स्वधाम्ना।
दोःखर्जूरदूरगर्जद्विबुधरिपुवधूकण्ठवैकल्यकल्या
ज्वालाजाज्वल्यमाना वितरतु भवतां वीप्सयाभीप्सितानि।।'

(सुदर्शनशतकम्, श्लो. २)

इति स्तुवन्ति। वेदान्ताचार्याः सुदर्शनाष्टके जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन इति मधुरफणितिभिः स्तोत्रयामासुः। पाञ्चरात्रसंहितासु पुराणेषु सर्वत्र चक्रराजस्यैव प्राधान्यं पश्यामः। अतः भगवतः दिव्यालङ्कारभूतः दिव्यायुधोऽयं शिष्टजनरक्षणे दुष्टजनशिक्षणे भगवत्सङ्कल्पानुगुणं प्रवर्तते। "सुरद्विषां प्राणविनाशि विष्णोः चक्रं सदाहं शरणं प्रपद्ये" इति प्राचीनस्तोत्रानुसारेण शरणमुपगताः पराशराः, प्रपद्ये इति पदेन प्राचीनस्तोत्रमस्मारयन् ।

**दाशरथिप्रतिनिधिश्रीरङ्गनाथसेवैकधारयोर्हनुमद्विभीषणयोः स्तवः-**

श्रीरङ्गमहामन्दिरे सुदर्शनसेवानुपदं रक्षाभूतवानरराक्षसानुभवः प्रत्यक्षीक्रियते । यथा -

'हनुभूषणयो स्यां यतमाविह मोक्षमुपेक्ष्य।

रघुनायक निष्क्रयभूतं भुवि रङ्गधनं रमयेते।।' ( श्लो. ५६ )

इत्यत्र हनुमविभीषणौ रघुनायकस्य प्रतिनिधिभूतौ, रामाराध्यं कुलधनं भुवि रमयेते। एतौ करस्थं सिद्धं परमपुरुषार्थमुपेक्ष्यात्र निवसतः, परमपुरुषार्थादपि रङ्गधनानुभवे परतत्त्वबुद्धिः प्रादर्शयतांम् । हनुमान् परमभक्तः "दासोऽहं कोसलेन्द्रस्य" (श्रीमद्रामायणम्, ५-४२-३४) इति दास्यभक्तिं प्राकटयत् विभीषणोऽपि ."सर्वलोकशरण्याय राघवाय महात्मने" ।(श्रीमद्रामायणम्, ६-१७-१५) इति शरणागतिं कृतवान्। उभावपि शरणागतिशास्त्रप्रवर्तकौ। , तादृशराघवदासयोः दासोऽहं भूयासमिति एतयोरन्ययोरुभयतरस्यामिति श्रीपराशराः वाञ्छन्ति स्म। "दुर्लभो मानुषो देहः" इति दुर्लभे मानुषे देहेऽनादरः। मास्तु मानुष्यम्। वानरो वा भूयासम्। राक्षसो वा भूयसम्। अहमन्यतरो भवेयमिति प्रार्थयामासुः। यतो हि रघुनायकस्य प्रतिभूः रङ्गधामा यद्यपि रघुनायकोऽनयोर्नायकः। एतद्भक्तिक्रीतः स अनयोः विक्रियार्हो भवतीति व्यज्यते। रामरत्नं विक्रीयते। रङ्गधनं रङ्गरत्नञ्च क्रीयते। रामाराध्यं रामकुलधनं रङ्गधनं रामादधिकार्धं किल। चतुराविमावल्पं दत्वाऽधिकं क्रीणीतः, 'एष ह्येवानन्दयाति' इति तैत्तिरीयमनुसृत्य प्रसिद्धिं सर्वानन्दो हेतुभूतमानन्दमयमानन्दयतः सर्वोत्कर्षेण वर्तेत इति तौ प्रणमन्ति स्म।'

**श्रीरङ्गराजगर्भगृहद्वारप्रवेशवेत्रश्रेष्ठस्तवः -**

श्रीपराशरार्याः श्रीरङ्गमन्दिरप्रवेशवेलायां श्रीरङ्गनाथसम्बन्धसेवां कुर्वाणानां चेतनाचेतनानामपि स्तोत्रं कुर्वतः सर्वान्तर्यामिनः नारायणस्य सम्बन्धं नारशब्दविवरणरूपं प्रदर्शयन्ति स्म। "इतो बहिः पञ्चपराञ्चिखानि प्रत्यञ्चितानि स्युरितोऽन्तरित्थम्" इत्यस्मिन् श्लोके पञ्चेन्द्रियाणि इतः बहिः पराञ्चितानि इतोऽन्तः प्रत्यञ्चिस्युः इति औपाधिकेभ्यो निरुपाधिभोग्ये प्रत्यापरत् वेत्रवरं शरणं व्रजामि निर्निरोधप्रवेशार्थमिति, प्रार्थयन्ति स्म। अत्र सर्वगन्धः सर्वरसः इत्युक्तस्योपलक्षणात् पञ्चेन्द्रियान्यनुभाव्याविषया अपि श्रीरङ्गनाथे

सन्तीति उक्तप्रकारेण पदार्थेभ्यः स्वत एव भोग्यभूते श्रीरङ्गनाथे गोपुरादीनामपि श्रीरङ्गनाथसम्बन्धनिबन्धनं वा भोग्यत्वमिति महतामभिप्रायः।

**आमोदस्तम्भद्वयस्तवः-**

प्रत्याहारे कृते "प्रत्याहृतेष्विन्द्रियेषु कश्चिद्धीरः प्रत्यगात्मनः मैक्षदा वृत्तचक्षुरमृतत्वमिच्छन्" इत्युक्तरीत्या प्रत्यगात्मदर्शनं लभते। अस्मिन्नाश्रितजने कटाक्षाः पतन्ति। कटाक्षा अमृतनदीप्रवाहत्वेनातिवेगं निर्गच्छन्ति। तत्प्रवाहवेगेन मज्जिता अवलम्बं मृगयामहे। तत्प्रवाहमध्यवर्तिन्यन्तरङ्गोऽवलम्बोऽपेक्ष्यते। स्तम्भद्वयं चावलम्बी भवति। अन्तर्हृदयेन्द्रियाणामन्तरङ्गाणामस्माकमन्तरङ्गौ आमोद-स्तम्भावलम्बनं भवतः। दयासरिद्वेगाकुलिता लीलायिताश्च वयम्। अतिवेगेनैकस्मात् स्तम्भात् भ्रंशे स्तम्भान्तरमत्स्यवलम्बनायेति श्रीरङ्गशायि दिव्यमङ्गळविग्रहसौगन्ध्यमेव स्तम्भद्वयात्मना परिणतमिति, तौ आलम्बनतया अभिगच्छाम इति स्तुवन्ति।

**श्रीरङ्गविमानान्तःप्रदेशवन्दनम् -**

श्रीमन्तः पराशरार्याः दीप्रशेषं श्रीभूमी तद्रम्यजामातृगर्भं उन्मीलितायाः श्रीः दिव्यमाणिक्यभूषामञ्जूषायाः कुल्यं श्रीरङ्गान्तर्मन्दिरं पश्येम इति स्वाभिलाषं विज्ञापयन्ति। प्रत्याहृतकारणानामन्तर्मन्दिर-मन्तर्माणिक्यगर्भोन्मीलिता मञ्जूषेवाभाति। रम्यजामाता श्रीरङ्गराजः। जामातृवदाद्रीयते वधूभ्यां विष्णुः । विष्णुः खलु जामाता । जामाता विष्णुवत्पूज्यः। तद्रम्यजामातेति श्रीभूम्यो रम्यजामाता। तस्य तज्जामातृत्वानुपपत्तौ जामातृत्ववदादरणीयत्वमात्रं लक्ष्यते। आदरस्य निरतिशयत्वद्योतने तात्पर्यम्। नित्यवधूवरगर्भमिदं मन्दिरम्। नित्यकल्याणवत्त्वं च व्यज्यते। यथा प्रणवो वधूवरगर्भः तथा प्रणवविमानम्। न केवलं दिव्यदम्पतीगर्भम्। कौस्तुभरत्नगर्भञ्च। तद्रत्नं विना प्रणववत्त्वं न स्यात् श्रियःकोशे श्रियोऽप्यवस्थितिरावश्यकी। रत्नपेटिकाया उद्घाटितकवाटत्व एवान्तःस्थितोत्तमरत्नदर्शनं स्यात्। अस्मिन् कोशे नायकरत्नं श्रीः रत्नगर्भा वसुन्धरा जीवरत्नानि च सन्ति।

प्रणवे त्रयाणामपि स्फुटं दर्शनम्। परस्य ब्रह्मणो रूपं शेषत्वं स्फुटमीक्ष्यते। वयं च दृशां प्रयोजनं लभेमहि इति श्रीरङ्गान्तर्मन्दिर-साक्षात्कार एव साक्षात्फलमिति भावः ध्वन्यते।

**श्रीरङ्गशायिपादारविन्दसंवाहिनीस्तवः -**

श्रीभट्टपादाः श्रीरङ्गनाथमहाप्रभोः दर्शनवेलायां विविध-परिजनपरिचारकवर्गं स्तुवन्ति। एवं क्रमेण पादाब्जसंवाहिन्यो वर्ण्यन्ते। तासां कराग्रेषु लता, कृपाणानि, स्वर्णपात्रं, कलाची च भवन्ति। लीलाशब्दः प्रत्येकमन्वेति -

'लीलालता कृपाणी भृङ्गारपतद्ग्रहार्पितकराग्राः।
प्लोतावतं सितकुचाः पादाब्जसंवाहिनीर्वयं स्तुमहे।।' (६१)

इत्यस्मिन् श्लोके एकषष्ठितमे विज्ञापयन्ति स्म। अत्र अब्जसंवाहनयोग्यतालाभाय लतावतंसादिसाहचर्यवर्णनं समञ्जसमेव। ता वयं स्तुम इति निवेदयामासुः।

**चामरग्राहिणीस्तवः -**

श्रीरङ्गनाथस्य चामरग्राहिण्योऽत्र वर्ण्यन्ते। श्रीमति वैकुण्ठेऽपि परमपदनाथसमीपे चामरग्राहिण्यः भगवतः पार्श्वे कैङ्कर्यं कुर्वन्तीति जानीमः। एवमेव-

'कूर्मादीन् दिव्यलोकान् तदनु मणिमयं मण्टपं तत्र शेषम्।
तस्मिन् धर्माधिपीठं तदुपरि कमलं चामरग्राहिणीश्च।।'

(तिरुवाराधने) इति भगवतः आराधने पठन्ति भागवतजनाः। चामरकैङ्कर्यविषये श्रीवैष्णवदेवालयेषु महतीं श्रद्धां प्रदर्शयन्ति। चामरग्राहिण्यः नवसंख्याकाः भवन्ति।

"मुकुळितनळिनास्साकौमुदीका ...
इतरकरोच्चलचामरमाश्रयेयम् ।।"

एताः च परिचरणरूपसेवायां निरतिशयानन्दानुभवो व्यज्यते। श्रीरङ्ग-चन्द्रमसः सन्निधौ तन्नयनाब्जानि मुकुळितानि भवन्ति। कृतनमस्य-देकहस्तत्वमुकुळितनळिनत्वयोः उच्चलचामरत्वसकौमुदीकत्वययोश्च बिम्बप्रतिबिम्बभावः। एकहस्तकृताञ्जलिनिषेधो नात्र प्रसरेत्। अन्यस्य

हस्तस्य कैङ्कर्यव्यापृतत्वात् बद्धाञ्जलिपुटाहृष्टाः सत्कुर्वत्य इमाश्चामरग्राहिण्यः भवन्ति। तासां भृत्या भवाम इति दास्यभक्तिं प्रपन्नजनकृत्यत्वेनाभिलषन्ति स्म। अत्र नमस्यदेकहस्तस्य मुकुळित-नळिनसाम्यं चामरस्य कौमुदीसाम्यं चाभिमतम्। एतावत्पर्यन्तं कावेरी-मवगाहिषीयेत्यारभ्य विवर्यमन्त्ररत्ननिष्ठनारपदविवरणं कृतवन्तः। अष्टश्लोक्यां श्रीपराशरभट्टपादाः तृतीये श्लोके नारायणपदार्थं विवृण्वन्तः "नराणां नित्यानामयनमिति नारायणपदम्" इति वदन्तः

‘नारस्त्विवति सर्वपुंसां समूहः परिकीर्तितः।
गतिरालम्बनं तस्य तेन नारायणस्मृतः।।
नारो नराणां सङ्घातः तस्यायमयनं गतिः।
तेनास्मि मुनिभिर्नित्यं नारायण इतीरितः।।
नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः।
तान्येव चायनं तस्य तेन नारायणः स्मृतः।।
आपो नारा इति प्रोक्ताः अपो वै नरसूनवः।
ता एव चायनं तस्य तेन नारायणः स्मृतः।।’ (मनुस्मृतिः ).

इति नारशब्दः प्रपञ्चितः। श्रीमतां भगवद्रामानुजाचार्याणां शरणागति-गद्यानुसारं"अखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणा-नन्तज्ञानानन्दैकस्वरूपेत्यारभ्य प्रकृतिपुरुषकालात्मकविवधविचित्रानन्त-भोग्यभोक्तृवर्गभोगोपकरणभोगस्थानरूपनिखिलजगदुदयविभवलयलीलः" इति दिव्यवाक्यान्तं नारपदार्थः सङ्गच्छते इति कृत्वा -

‘ज्ञानादयो गुणा रूपं लक्ष्मीर्नित्यानपायिनी।
भूमिनीळादयो देव्यश्शेषाद्या नित्यसूरयः।।
तद्धाम परमं कालः पुरुषः प्रकृतिस्तथा।
महदादिधरान्तानि सप्त चावरणान्यपि।।
ब्रह्माण्डञ्च तदन्तस्था लोकाश्च सचराचराः।
एवमण्डान्यनेकानि तत्सर्वं नारमुच्यते।।’

इति परमप्रमाणानि अष्टश्लोकीव्याख्यायां श्रीप्रतिवादिभयङ्करार्याः प्रदर्शितवन्तः। तदनुगुणं पराशरभट्टार्याः एकत्र परमं पदम्, अपरत्र

श्रीरङ्गमहाक्षेत्रं, विविधानि नारपदान्तर्भूतानि चराचराणि, श्रीरङ्गराजमहामन्दिरप्रवेशसमये पूर्वाचार्यप्रपत्तिमार्गानुसारं स्वकीये श्रीरङ्गराजस्तवे पूर्वशतके विवर्यमन्त्ररत्ननिष्ठनारपदं प्रत्यक्षं प्रादर्शयन्। नरायणपदार्थभूतं श्रीरङ्गराजं विस्तरेण स्तुत्या प्रतिपाद्यं तच्चरणौ शरणं प्रपद्ये इति प्रतिपाद्यं पूर्वखण्डार्थं परिसमापयन्ति पूर्वशतकेन। तत्र प्रथमतः चतुर्दशभिः श्लोकैः चतुर्भुजं समासीनाभ्यां श्रीभूम्यामभितस्सेवितं सेवमानजनाभिगमनाभिलाषेणेवशेषशयनादुत्थाय स्थितं श्रीरङ्गनाथं रम्यजामात्रभिधानं शरणं भजन्ते। एतावत्पर्यन्तं द्विषष्ठिश्लोकान्तं नारपदमेव व्यावृण्वानाः पराशराः परवशाः भूत्वा नारायणं श्रीरङ्गराजं त्रिषष्ठितः प्रणमन्ति स्म।

'उत्फुल्लपङ्कजतटाकमिवोपयानि
श्रीरङ्गराजमिहदक्षिणसव्यसीम्नोः।
लक्ष्मीं विहाररसिकामिव राजहंसीं
छायामिवाभ्युदयिनी मवनीं च तस्याः।।'

(६३) इति वर्णयितुं प्रारभन्ते। पूर्वशतकस्य मध्यमः श्लोकोऽयम् । अत्रैव भूमिसहितश्रीरङ्गराजस्य प्रथमदर्शनम्। दिव्यविग्रहस्य समुदायानुभवो नक्षत्रसंख्याकैः श्लोकैः कृतः। अनन्तरमामौळेः आ च पादादनुभवः। "एष ब्रह्म प्रविष्टोऽस्मि ग्रीष्मं शीतमिव ह्रदम्" इति ब्रह्मावगाहः। उत्फुल्लपङ्कजवत् तटाकानुभवः। पुण्डरीकोप-मितस्वाक्षिणी स्वमुख-करपदाब्जानि च पङ्कजानि श्रीरङ्गराजह्रदे। अयमेव तटाकः। अयमेव हंसः। दक्षिणसव्यसीम्नोः विहाररसिकां राजहंसीमिव भगवतीं लक्ष्मीं तस्याः छायामिवाभ्युदयिनीम् अवनीं सेवेयेति प्रार्थयामासुः। तदनु "कृष्णं लोकय लोचनद्वय" इति श्रीकुलशेखरदिव्यानुभवं "पिब! नयनपुरस्ते रङ्गधुर्याभिधानम्" इत्यस्मिन् श्लोके परिफुल्लत्पुण्डरीकं तटाकमिव श्रीरङ्गनाथं तस्मिन् विहरन्तीमिव राजहंसीमिव श्रियं, तस्याः प्रतिफलनमिव विश्वम्भरां पश्येति, "हरिसरसि विगाह्य" इति मुकुन्दमालानुभवं (श्लो. ९) प्रादर्शयन्। सौशील्यशीतलम् अपारकृपा-तरङ्गसंप्लाविताखिलाकृतिमभूमिनिम्नं लक्ष्म्या च वसितं प्रसन्नं

श्रीरङ्गराजमिव पद्मसरः विगाहमनाऽभूमेति श्रीमदर्चावताराणां सर्वतस्सन्निहितप्रसन्नसरसगम्भीराम्भसम्भृतमहानदीह्रदनिवहतुल्यतया सर्वदेशसर्वकालसर्वावस्थसर्वजनाभिगम्यत्वं पूर्वाचार्यैः प्रत्यपादि। तदभिप्रेत्यामृततटाकसमानाकारत्वं श्रीरङ्गराजस्योक्तमिति सम्प्रदायिकोऽभिप्रायः। मन्त्ररत्ने श्रीशब्दमात्रप्रयोगेऽपि तद्विवरणकृद्भिः श्रीमद्भट्टारकदेशिकैः पुरुषकारपौष्कल्याय महिषीद्वयपुरस्कारेण श्रीरङ्गराजाभिगमनं कर्तव्यमित्यर्थश्शिक्षितः। पुरुषकारभूतलक्ष्म्याः सन्निधानेन शरणागतापराधानुसन्धाननिबन्धहृदयकालुष्यरहितं स्वच्छं च अनुभवन्तो भवेम इति -

'आपादमूलमणिमौळिसमुल्लसन्त्या.............

श्रीरङ्गराजमनिमेषमनुस्त्रियास्म।।' इति, (६७)

सूरिपामरविभागराहित्येन कृत्स्नजनमनस्यापि सौहार्दं वितन्वानं "सुहृदं सर्वभूताना'मिति गीतासन्देशदेशिकं श्रीरङ्गराजं निमेषशून्यमनुभूया स्मेति।

'श्रममपहरतां मे रङ्गधामेति तत्त-

द्वरमयफलनम्रः पत्रलः पारिजात।।' (६८)

इत्यनेन तत्तद्वरमयै नानाविधाधिकारिभिः स्वरुच्यनुरूपं प्रार्थितैः वररूपैः फलैः नम्रः रङ्गधामेति पारिजातः मम श्रममपाकरोत्विति पारिजातसाम्यमुपवर्णिताः। अथैकोनसप्ततितमे श्लोके -

'सम्भाषमाणामिव........................

रङ्गास्पदं मम शुभाश्रयमाश्रयाणि।।' (६९)

भुजत्रयस्यैव दिव्यास्त्रभूषित्वेऽपि अभयमुद्रामुद्रितभुजस्य शार्ङ्ग्रहणार्हतया वा अभयमुद्राया अप्याश्रितभयनिवर्तकता निमित्तकास्त्रत्वप्रतिपत्त्या वा दिव्यास्त्र-पुष्पितचतुर्भुजमत्युदारं रङ्गधामानं शुभालम्बनतया अनन्यभोग्यतया भुञ्जानीति वर्णितवन्तः। अथ सप्ततितमे श्लोके भगवान् रङ्गनाथः किं भाषते? कथं च भुजैः भाषणे उपकार इति चोच्यते। करतलस्याभयवक्तृत्वञ्चोच्यते। त्रिषु बाहुष्वायुधाः भवन्ति, अभयकरं करतलमपि सम्भाषते। न केवलं वक्त्रम्। 'पश्यत्यचक्षुः' (श्वे.

३-२९) इति न करणायत्तकारणव्यापारोऽयं करतलेनापि भाषत इत्ययं महत्तरः विषयः जनान् उद्‌बोधयन्ति। श्लोकचित्रणं पश्यतु-

'एते शङ्खगदासुदर्शनभृतः क्षेमंकरा बाहवः
पादद्वन्द्वमिदं शरण्यमभयं भद्रं च वो हे जनाः।
इत्यूचिष्यभयङ्करे करतले स्मेरेण वक्त्रेण त-
द्व्याकुर्वन्निव निर्वहेन्मम धुरं श्रीरङ्गसर्वं सहः॥' (७०)

हे जनाः शङ्खचक्रगदासुदर्शनादिभृतः एते बाहवः अभीष्टप्रदाश्च भवन्ति। इदं पादद्वन्द्वं सर्वसमाश्रयणीयतया सन्दृश्यमानमनिष्ट-निवृत्तिपूर्वेकेष्टप्रदं भवति। युष्माकं भयाभावः शुभं च भवतीति अभयमुद्रामुद्रिते करतले उक्तवति सति स्मितविकसितेन वक्त्रेण व्याकुर्वन्निव श्रीरङ्गसर्वसहः मद्रक्षणभरं निर्वहतु। अहं निर्भयो निर्भरो भवामीति श्रीपराशराः महाविश्वासं प्राकटयन् । तदनन्तरे श्लोके सर्वेषामङ्गानामात्मदानेऽहंप्रथमिका वर्ण्यते। न केवलमाश्रयिणः पूर्वमेवाहंप्रथमं सम्भाषणं कुर्यामिति मनोरथः एकैकेनाङ्गेन इतरेभ्योऽङ्गेभ्येऽपि प्राथमिकत्वमिष्यते आश्रितबलेन इति व्यंज्यते। तदनन्तरे द्विसप्ततितमे श्लोके हे श्रीरङ्गश्रुङ्गार! ते हृदयालवः आलोकरसवशादीशानां ईषत्स्मितं प्रच्छायानि वचांसि पद्मनिलया-चेतश्शक्यं वपुः चक्षुष्मन्ति गतागतानि, नाम उत्सवमूर्तेः नम्बेरुमाळ्-स्वामिनः प्रसिद्धमनोनयनहारि सलीलगतागतादिविहारयात्राभिप्रेताः भवन्ति। एते विषयाः कुलिशकठोराणि शुष्कशुष्काणि अस्मच्चेतांसि सिञ्चन्तीति दहराधिकरणभाष्योक्तगुणसागरे मग्नाः भवन्ति श्रीपराशरसार्वभौमाः। परिच्छेदातीतोयमनुभवः।

'आलोका हृदयाळवो रसवशादीशानमीषत्स्मितं
प्रच्छायानि वचांसि पद्मनिलया चेतः शरण्यं वपुः।
चक्षुष्मन्ति गतागतानि च इमे श्रीरङ्गश्रुङ्गार ते
भावा यौवनगन्धिनः किमपरं सिञ्चन्ति चेतांसि नः॥' (७२)

अयं श्लोकः केषुचित्कोशेषु न परिदृश्यते। अथ पराशराः दिव्यावयव-समुदायसन्निवेशातिशय एव सन्दर्शनीयमिति श्लोकद्वयेन आमनन्ति-

"आयत्किरीटमलिकोल्लसदूर्ध्वपुण्ड्रम्" इत्यारभ्य भगवतः किरीटम्, ऊर्ध्वपुण्ड्रम, आकर्णलोचनम्, अनङ्कुशकंर्णापाशम्, उत्फुल्लवक्षसम्, उदायुधबाहुम् अर्हन्नीवीमब्जपदं रङ्गपतिं च सेवामहे" इति पुनः पारवश्येन -

'अब्जन्यस्तपदाब्जमञ्चितकटी संवादि कौशेयकं
किञ्चित्ताण्डवगन्धिसंहननकं निर्व्याजमन्दस्मितम्।
चूडाचुम्बिमुखाम्बुजं निजभुजाविक्रान्तदिव्यायुधं
श्रीरङ्गे शरदश्शतं तत इतः पश्येम लक्ष्मीसखम्।।' (७४)

इत्यस्मिन् श्लोके लक्ष्मीसखं शतं संवत्सरान् यावदायुषं श्रीरङ्गे तत इतः सर्वत्रापि साक्षात्करवामेति आद्रेण विज्ञापयन्ति।

'अग्रे तार्क्ष्येण पश्चादहिपतिशयनेनात्मना पार्श्वयोश्च
श्रीभूमिभ्यामतृप्त्या नयनचुळकनै सेव्यामानामृतौघम्।
वक्त्रेणाविस्मितेन स्फुरदभयगदाशङ्खचक्रैर्भुजाग्रैः
विश्वस्मै तिष्ठमानं शरणमशरणं रङ्गराजं भजामः।।' (७५)

इति पञ्चसप्ततितमे श्लोके भूमापुरुषो देवीवाहनशयनादिविशिष्टः वर्ण्यते। पश्चात्पुरतो दक्षिणतः उत्तरेण तदनुभवोऽपि वर्ण्यते। उत्सवमूर्तिविशेषोऽयं श्लोकः। स एव पुरस्तातोत्तरतो भवति। अयं श्लोकः "आरावमुदे" (तिरुवाय्मोळि, ५-९-१) इति शठकोपसूरि-तिरुवाय्मोळिदिव्यप्रबन्धस्य पञ्चमशतकाष्टमदशकसाम्यं भजतीति महान् विशेषः एव। अस्मिन् श्लोके श्रीरङ्गनाथदर्शनं यथातथं नेत्रवतामपि अनुगृहीतवन्तः भुजगशयनो मूलविग्रहः। स च उत्सवमूर्तेरात्मा। उभयोस्तादात्म्यम्। स्वेनैव मूलविग्रहेण निपीयते। अत्र उत्सवमूर्तेः पश्चात् मूलविग्रहस्य कीर्तनं भवति। भगवान् स्वस्यापि अनुभाव्यः एव। ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम्" (यामुनार्याणां कान्तास्तोत्रे) इति भावः स्मर्यते। श्रीरङ्गनाथः अमृतप्रवाह इति दिव्यसूरिवचनं स्मारितं भवति। प्रतिक्षणं चुळकनेऽप्यविच्छिन्ननवनव-प्रवाहपरम्परास्यन्दन्त इव भवेत्। विश्वस्मै तिष्ठमानं तिष्ठदवसरो विश्वतापप्रशममनोरथं व्यनक्तीव निद्रां परित्याज्यास्मदर्थं तिष्ठते।

अस्मत्त्राणेन परस्य तस्य फलमित्यात्मनेपदेन द्योतते। "लोकविक्रान्त-चरणौ शरणं ते व्रजं विभो" (श्रीमद्रामायणम्, ६-१७-१५) इति तिष्ठदवसरः शरणवरणानुकूलः शरणं प्रपद्यामहेति परिपूर्णाभिभावः मनोहर एव। इत्थं रम्यजामातरं श्रीरङ्गराजमुपायतया अनुसन्धाय तदीयपादारविन्दयोः निरन्तरपरिचर्यैवोपेयकाष्ठत्त्वेनानुसन्धेयेति सिद्धान्तमर्थं प्रार्थयन्ते।

'आर्तापाश्रयमर्थिकल्पकमसह्यागस्करक्ष्मातलं
सद्यः संश्रितकामधेनुमभियत्सर्वस्वमस्मद्धनम्।
श्रीरङ्गेशवरमाश्रयेम कमलाचक्षुर्महीजीवितं
श्रीरङ्गे स सुखाकरोतु सुचिरं दास्यं च दत्तां मयि।।' (७६)

श्लोकेऽस्मिन् औदार्यगुणाः श्रीपराशरार्यैः अनुभूयन्ते। अहं तु दासः, मत्स्वरूपानुकूलं तद्दास्यं मम दद्यात्। यदप्यात्मानं मम दद्यात्, मा ममैश्वर्यं भवतु। दास्यमेव मम भवतु ईश्वरत्वेनैवात्मानं मम ददातु। मास्तु ममैश्वर्यम्। धर्मिणमात्मानं मे ददातु । न स्वधर्ममैश्वर्यम् । मद्धर्मं दास्यमेव मह्यं ददादु इति श्रीरङ्गनाथं उपायत्वेन सन्ततसत्पादारविन्द-सेवनमेवोपायमिति सिद्धान्तार्थं प्रार्थयन्ते। मम कुलदैवः श्रीरङ्गनाथः आर्तानामाश्रयः, याचकानां कल्पवृक्षः। असह्यापचारकृतवतां भूदेवीवत् सहनशीलः। आश्रितानां कामधेनुः, वसुप्रदः, कुलधनं, महालक्ष्म्याः नेत्रभूतः, भुवः प्राणनाथः सः श्रीरङ्गे सुखाकरोतु इति मङ्गळाशासनं कुर्वन्तः दास्यमनुगृण्हातु इति, नित्यकैङ्कर्यं च दत्वा मां नित्यकिङ्करो भवानीति श्रीभाष्यकारं प्रपत्तिपूर्वकं याचितवन्तः।

अथ पूर्वशतकपरिसमाप्तिपर्यन्तं नागराजशायिनं श्रीरङ्गराजं तदीयसौशील्यवात्सल्यकारुण्यलावण्यसौन्दर्यसौकुमार्यादिमुखेन मौळ्यादि पादमूलान्तं स्तोतुकामः तावत् प्रथमतः तदीयशय्याफणीश्वरं प्रणमन्ति स्म। अस्मिन् श्लोके 'स्वफणवितानदीप्रमणिमालिसुदामरुचिम्रदिम-सुगन्धिभोगसुखशायितरङ्गधनं मदभरमन्दरोछ्वसितनिश्वसितोत्तरळं फणिपतिडोलिकातळिमप्रणताः आश्वसिमः इति डोलारूपं मञ्चं प्रणताः। श्रीरङ्गशायिसौकुमाराद्यनुगुणवितानप्रदीप्तमणितोरणधावल्य-

मार्दवसौरभ्यतरलत्वविशिष्टं स्वयमेव द्विषन्ति षूदनसमर्थडोला-तळिमन्दृष्टमिति विश्वस्तास्मेति भाव: मनोहरस्सन्"। भगवत्या गोदादेव्या विरचिततिरुप्पावैमहाप्रबन्धस्थां "कुंत्तुविळुक्केरिय कोट्टुक्काळ् कट्टिटल्मेळ् मेत्तेन्न पञ्चशयनत्तिल् मेलेरि" इति गाथां ज्ञापयन्ति। शय्यसौभाग्यरूपोऽयं क्रम: सम्प्रदायश्रद्धान्गुञ्जन्त्येव। तदनु एकोनाशितितमे श्लोके अनन्तशायिनं "वटदळदेवकीजठरवेदशिर: .............. प्रणतार्तिहरम्" (७८) इत्यस्मिन् श्लोके शय्यान्तराणि वर्ण्यन्ते। "वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि" इत्युक्तदिशा निरतिशबृहद्ब्रह्मैव देवकीजठरवेदशिर: कमलास्तन-शठकोपवाक्वपुषि रङ्गगृहे शयितं वरदम् उदारदीर्घभुजलोचनसंहननं प्रणतार्तिहरं परमपुरुषं उपासिषेयेति जगदु:। अत्र 'शेषश्चित्रं विमलमनसां मौलयश्च श्रुतीनां सम्पद्यते विहरणविधौ यस्य शय्याविशेषा:' इति वेदान्ताचार्याणां श्रीस्तुतिरवगम्यते। प्रणतार्तिहर-मित्युक्ते तन्मूर्तेरभेदबुद्ध्या श्रीवरदराजस्यैव वा ग्रहणं स्यात्। वरदशब्द: प्रणतार्तिहरशब्द: इति शब्दद्वयं देवराजस्मरणं तदभेदबुद्धिञ्च द्रढयति इव ध्वन्यन्ते। तदनन्तरश्लोके प्रधाने क्षीराब्धि: परमव्योमस्थ-शेषपर्यङ्कश्चेति द्वे शय्ये भवता विस्मृते इत्याक्षिप्ते उच्यते। नाहं व्यस्मार्षं रङ्गशायी भगवांस्ते विस्मृत्यात्र रङ्गे शेत इत्यच्युत इव उदधिपरमव्योम्नो विस्मृत्येति। निद्रानप्यस्मान् मन्वीत। जाग्रतोऽपि वयं तं न मनुमहे। निद्रानपि सोऽस्मान्मन्वीतेति श्रीरङ्गविमाने सर्पशय्या-मधिशायिनं मेचकं कमलपदकराक्षं नीरदेन निपीतं जलधिमिव. अब्दौ निहिताद्रिमिव अद्रिकुञ्जे शयानं कुञ्जरं वा पूरुषं वन्दिषीयेति वर्णनं महच्चित्रम्। आताम्राधरपदपाणिविद्रुम: कावेरीलहरिकरोपलाल्यमान-गम्भीराद्भुतार्णवस्य तर्णक इव श्रीरङ्गेशय: इह न: शर्म निर्मिमीतामिति प्रार्थितवन्त:। "श्रीरङ्गधामनि दयारसनिर्भरत्वात् अद्रौ दयाळुरिव शीतलकालमेघ:" इति वर्णिता:। अयं श्लोक:-

'त्वदीक्षणसुधासिन्धुवीचि विक्षेपशीकरै:।
कारुण्यमारुतानीतै: शीतलैरभिषिञ्चि माम्।'

(देवराजाष्टकम्, ८) इति काञ्चीपूर्णमहागुरोः देवराजाष्टकश्लोकं स्मारयतीति विशेष एव। श्रीपराशरभट्टार्याः पूर्वाचार्याणां श्रीसूक्तिसुधां यथानुगृण्हन्ति तद्वत् रामायणप्रयोगाश्चानुगृण्हन्ति। श्रीरङ्गशेषशयनं नयनैः पिबामः इत्यत्र 'लोचनाभ्यां पिबन्निव' इति वाल्मीकेः वदनारविन्दगळितं ज्ञापयन्ति। लोचनैपानमेह तदमृतस्य। एतदेवामृतं दृष्ट्वा तृप्यन्ति। न खादन्ति, न च पिबन्ति। निर्निमेषनयनाभ्यामनुभवन्ति। एवमेव रङ्गनाथं नन्दनवनमिव अम्बरपरिष्करणाङ्गरागाचिन्मयत्वात् संस्पर्शतः पुलकिता इव रङ्गेन्दुकान्तिमधिकाम् उपबृम्हयन्तीति ऊचुः। अथ स्वपितृपादानां कूरेशमिश्राणां सुन्दरबाहुस्तवानुगुणं -

'द्रुतकनकजगिरिपरिमिलदुदधिप्रचलितलहरिवदहमहमिकया।
स्नपयति जनमिममपहरति तमः फणिशयमरकतमणिकिरणगणः।।'

(८६) इति, भगवानेव फणिशयने मरकतमणिरिवाभाति। तन्नीलरश्मयोऽनुभूयन्ते। तैर्वयं स्नाप्यामह इव, अस्मदन्धन्तमः समपह्रियत इव, तत्कान्त्यालोकैः वर्णयन्ति स्म। तदनु श्रीरङ्गनाथस्य सौरभ्येणाप्लुतत्वं वर्ण्यते। कान्त्याम्भोमज्जनमुक्तम्। इदानीमत्रानन्दे मग्नत्वमुच्यते। परमसाम्यत्वत् शेषस्यापि सर्वगन्धत्वसम्भवः सिध्यति। तन्निःश्वासगन्धेनोपचीय इव शेषिणः सौरभम्। क्षीरशर्कर एव शेषशेषिणोर्मेलनं नितरां शोभते। तदेव -

'कनकमरकताञ्जनद्रवाणां मथनसमुत्थितसारमेलनोत्थम्।
जयति किमपि रूपमस्य तेजो वनगिरिनन्दनसुन्दरोरुबाहोः।।'

(सुन्दरबाहुस्तवः-३४) 'सौरभमाप्लुतदिशावधिरङ्गनेतुरानन्दसम्पदि निमज्जते मनांसि' इति भट्टार्याणां श्रीसूक्तिः वचनं दिगन्ताप्लावकमस्मन्मनांस्याप्लावयति। तदनु रङ्गभर्तुः लोचनचर्चा साहसावळीषु लेखयमानं पुष्पहास इति नाम दुहानं रङ्गभर्तुः सौकुमार्यं न अतिवाङ्मनसं भवतीति 'आधारनिलयो धाता पुष्पहासः प्रजागरः' (१०२) इति श्रीविष्णुसहस्रनामाध्ययनोक्तदिशा रङ्गभर्तुः सौकुमार्यं दिव्यमङ्गळविग्रहस्य मार्दवातिशयः उपवर्णितः। श्रीरङ्गाधिपस्य

सौन्दर्यप्रत्यङ्गशोभा, लावण्यशोभा उभेऽपि चमत्कारेण वर्णयितुमारब्धाः श्रीपराशराः स्वचक्षुषोः धैर्यमुपादिशन्। हे मन्दचक्षुः एकैकस्मिन्नवयवे अनन्तसौन्दर्ये निरवधिकावयवशोभायां मग्नोऽहं कथं सर्वमवयवं द्रक्ष्ये इति मुधामामंस्थाः। रङ्गराजाङ्गकानां सौभ्रात्रमस्तीति श्रीरङ्गनायकं-तत्तदवयवान्तस्सौन्दर्यमग्नतया तत उत्तीर्य अवयवान्तरानुभावशक्तमपि चक्षुरवयवसन्धिसौभाग्यवहलावण्येन अवयवान्तरे प्रेर्यत इत्यूचुः। अन्योऽन्यं सुघटितानामवयवानां समुदयाशोभानुभूयमानावयव-सुश्लिष्टा-वयवान्तरं दर्शनं न घटयतीति रसमयः अभिप्रायः। "युवत्वं रङ्गेन्दोः सुरभयति नित्यं सुभगताम्" इति रङ्गेन्दोः युवत्वं नित्यं शुभगतां सुरभयति। सौरभ्यसौभाग्ययोरत्र नित्यमैकाधिकारम्। अस्य युवत्वं नित्यम्। प्रसिद्धचन्द्रविलक्षणोऽयं सौरभ्यवान् रङ्गचन्द्र इति विज्ञापित-वन्तः। इत्थं 'स्वफणिवितानदीप्रे'त्यारभ्य श्रीरङ्गशायिनः शय्यासन-सौन्दर्यसौगन्ध्यसौकुमार्यलावण्यतारुण्यदिव्याभरणादिशोभावैभवरसं सामान्यतो वर्णयित्वा अनन्तरमुत्तमाङ्गादि पादारविन्दपर्यन्तं किरीटादि-नूपुरान्तं तद्दिव्याभरणैस्सह वर्णयितुं प्रारभन्ते। मुखादारभ्य सौन्दर्यानुभवः। प्रथममृषेः शठकोपस्य सुन्दरबाहुमुखशोभनानुभवरीत्या किरीटस्य मुखशोभनाविकासत्वेनोत्प्रेक्षणमिति, रङ्गराजस्याधिराज-सूचककिरीटस्य मुखचन्द्रिकाकान्तिविकासत्वान्मुखमेवानुभूयते -

'किरीटचूडरत्नराजिराधिराज्यजल्पिका।
मुखेन्दुकान्तिरुन्मुखं तरङ्गितैव रङ्गिणः।।' (९१)

श्लोकोऽयं पञ्चचामरवृत्तभूयिष्ठः। भगवन्मुखं चामरपञ्चकेन विवीजयिषतामिव वर्तते। उत्तरार्धपादद्वयं न लभ्यते। श्रीरङ्गराज-स्तवस्य गर्गरामानुजीयव्याख्याग्रन्थे तु श्लोक एव नास्ति। परन्तु अयं श्लोकः तिरुवाय्मोऴिमहाप्रबन्धस्य ३-१-१ तृतीयशतके प्रथमदशक-साम्यं भजत इति शिष्टानां समयः।

मुडिच्चोदियाय्। उनदुमुच्चोदि मलन्ददुवो।
अडिच्चोदिनीनिन्न। तामरैयायलरुन्ददुवो।
पडिच्चोदि याडैयोडुम्। पलकलनाय्। निन्पेन्बीन्।

कडिच्चोदि कलर्ददुवो तिरुमालै कुट्टुरैये।।

उभयविभूतिसार्वभौमत्वरूपसाम्राज्यसूचिका चूडानाम किरीटस्याधः-प्रदेशे वलयितं पट्टाकारं भूषणं किरीटचूडम्। अधिराज्यसूचकत्वम् अतिविलक्षणकिरीटराजप्रत्युप्ततात्यन्तदीप्तियुक्तोन्मुखसञ्जाततरङ्ग-विस्तृता श्रीरङ्गनाथस्य मुखेन्दुकान्तिरिवाभातीति, किरीटोपरिभागे माणिक्यघटितमकरिकाभूषणं भासते। तेन विलसति किरीटपर्वतशृङ्गं चेतनाचेतनविश्वाधिपत्यलक्ष्म्याः प्रियारामं क्रीडापर्वतोद्यानं भवति। तं परितः कटकवद्भासमानं चूडामणिमपि दिशि दिशि पुरस्तात् पृष्ठतश्चानुभवामः इति। एवमेव

'विहरतु मयि रङ्गिणश्चूलिका भ्रमरकतिलकोर्ध्वपुण्ड्रोज्वलम् ।'

इत्यनेन श्लोकेन अमृततटाकचन्द्राम्बुजस्मयहरशुचिमुग्धमन्दस्मितं श्रीरङ्गिणः मुखं मयि विहरत्विति प्रार्थितवन्तः। 'मुखपुण्डरीकमुपरि त्रिकण्टकं तिलकाश्च केसरसमासमौक्तिकाः' इति श्लोके रङ्गभर्तुः दिव्याननभ्रमरकाणि अभियन्मधुव्रतप्रकरश्रियं बिभ्रतीति प्रतिपादयन्तः । पुनः श्लोकान्तरेणाष्टमीचन्द्रसदृशललाटादमृतं प्रवहतीति त्रिपथगा-वदोधत्रयेण स्यन्दत इति अमृतौघत्रयमेव त्रिपुण्डरीकमिति ऊर्ध्वं गच्छन्ती मे अमृतौघाः इति "तयोर्ध्वमायन्नमृतत्वमेति" इति 'उत्थं तत्पुण्ड्रमूर्ध्वं जनिमरणतमःखण्डनं मण्डनं नः' इति श्रीशङ्कराचार्याः ऊर्ध्वपुण्ड्रेनात्मस्रोतसोर्ध्वगमनं व्यज्यत इत्यभिप्रयन्ति। नटस्यालिकं सम्यक्तिलकाङ्कितं स्यात् मां सम्यक् सम्प्रसादं करोतीति भावयामासुः। रङ्गभर्तुः भ्रुवौ लोचनयोः उपरि सविलासलास्य गतिं स्फुरतीति भ्रुवोः युगं शार्ङ्गनृत्तश्रियः गुरुकुलमिवोदयतीति वर्णयन्तः श्रीरङ्गनाथस्य नेत्रसौन्दर्यविषये सकलाङ्गं किल सर्वतोऽक्षिनेत्रे इति कृत्स्नजनरिरक्षिषाप्रयुक्तनिरवधिककारुण्याधारभूते श्रीरङ्गनाथनेत्रे स्वाधेयकृपावैपुल्यानुकूलस्ववैपुल्यसम्पादनाय कृत्स्नावयवव्यापनप्रवृत्ते सती प्रथमतः श्रोतव्याप्त्युद्युक्ततां स्वकीयदैर्घेण ज्ञापयत इति "श्रवोनासारोधात्तदवधिकडोलायितगते" (९९) इत्यस्मिन् श्लोके समाश्रितसंरक्षणक्षमतया श्रीरङ्गनित्यवासरसिकस्य नयनाब्जे मयि

विषये दयां क्रियास्तामिति प्रार्थयन्ति स्म। अत्र मुनिवाहनयोग्यनुभावः स्मर्यते। श्रीपराशराणां उत्प्रेक्षाः, भावनाः, कल्पनाः, अनितरसाध्याः इति वक्तुं करुणामृतकूलमुद्वहैषेति श्लोकः अलं भवति। गङ्गायां मणिकर्णिकादिघट्ट इवेयमुपकर्णिकेति नयने कुशलसंप्रश्नचतुरे भवत इति। लोचने मां स्नपयतां पाययतां चेति यद्यप्यहं लोचनाभ्यां तं न पिबेयमिति विज्ञापयन्ति। 'विलसति नासाकल्पवल्ली'त्यस्मिन् श्लोके रङ्गेन्दोः नासिका कल्पवल्लीव विलसतीति स्मितमपि तन्नवकुसुमं चुबककपोलं पल्लवोल्लसितमिति च वर्णयन्ति। यो यदिच्छति तस्य तदिति यदुक्तं भगवद्विषये तत्सत्यं तद्विग्रहावयवविशेषेऽपि ज्ञायते। अथ भगवन्तं श्रीरङ्गनाथं -

'नयनशफरविद्धौ कर्णपाशावरुद्धौ
रुष इव लुटतोऽर्चिर्मञ्जरीरुद्गिरन्तौ।
परिमिलदलकाळी शैवलामंसवेला-
मनुमणिमकरोद्धौ रङ्गधुर्यामृताब्धेः।।'

स्वायवभूतानासाकल्पबाल्याः स्वयमेव कारणममृताब्धिर्भवति भगवद्विग्रह इति वर्ण्यते। अयं स्वामी नटः। नटस्तु नवनवाद्भुतवेषं धरेत्। ज्योतींषि विष्णुः भुवनानि विष्णुः नद्यस्समुद्राश्च इति नद्यः समुद्राश्च तद्वेषाः। अमृताब्धित्वेन भगवद्विग्रहः शफरत्वेन नयने कर्णौ मत्स्यग्रहणार्थं विततपाशत्वेन अंसौ वेलात्वेन अलकालीशैलत्वेन च रूप्यन्ते। कुण्डले वर्ण्येते मकरिकात्वेन। वेदान्ताचार्याः भूषामयी मकरिकाविविधान् विहारान् इत्येतदनुभवकरणं कृतवन्तः। श्रीपराशराः अलकाल्यः शैवलमंसश्च वेला भवतीति अंशवेलां लक्ष्यीकृत्य लुठतः। मकरिकारत्नकान्तयो लुठन्तीति चित्रमुपवर्णितवन्तः। अथ रङ्गेन्दु-वक्त्रसरः वर्ण्यते। अधरमधुराम्भोजं कर्णपाशमृणाळिकावलयं नयनशफरं नासाशैवालवल्लरीकर्णिकामकरं अलकश्रेणीपर्यन्तनीलावलितद्रङ्गेन्दु-वक्त्रसरः अत्यन्तगाम्भीर्यमाधुर्यशैत्यप्रसादिमत्तया प्रसिद्धं सत् निरन्तरं मत्सन्दर्शनं विषयो भवत्विति प्रार्थयामासुः। "प्रणयविलगल्लक्ष्मी विश्वम्भराकरकन्दलीकनककवलयक्रीडासंक्रान्तरेखा इवोल्लसन् श्रीरङ्ग-

नेतुः स कण्ठः मां रमयतु इति कण्ठमुपवर्णिताः। पेरियाळ्वार्नाम महाभागवतदिव्यासूरिः स्वकीये तिरुप्पल्लाण्डुनामके द्रविडवेदस्य प्रणवस्वरूपे प्रबन्धे "मल्लाण्डतिण्डोळ् मणिवण्णा" (तिरुप्पल्लाण्डु, गाथा २) इति श्रीमन्नाराणभुजाभ्यां मङ्गळाशासनमकार्षुः। तदाधारीकृत्य 'भुजौ मे भूयास्तामुभयमपि रङ्गप्रणयिनः' इति श्रीरङ्गशायिभुजौ भजमानैर्विभज्य ज्ञातुं न शक्यत इति भगवतः भुजौ मे सर्वभूतेभ्योऽभयमभवतामिति स्तुवन्ति स्म। तथैव बहुमणिमुद्रिका कनककङ्कण-दोर्वलयै किसलयि रङ्गभुजदोर्द्वयमाश्रयाम इति चित्रालकमुद्रितं श्रीरङ्गसङ्गिनः दोर्द्वन्द्वं विजयते इति श्लोके कमलायाः सकलजगज्जननीत्वात् मद्रक्षाव्रतकौतुकेन महावीरपत्नीत्वात् शार्ङ्ज्या-किणकर्कशिम्ना सुकुमारत्वात् सुमनस्रक्सदृशमार्दवेन च प्रलोभनं कृत्वा तदुपधानीभूय तदीयालकसम्मर्दचिह्नचित्रस्य दोर्द्वन्द्वस्य सर्वोत्कर्षेण वर्तनं युक्तमिति प्रार्थितन्तः। एवम् उपधानीकृतं कराम्भोजं प्रार्थयन्ति चमत्काररूपेण।

'भवार्तानां वक्त्रामृतसरसि मार्गं दिशदिव' इत्यारभ्य, 'श्रयामि श्रीरङ्गे शयितुरुपधानीकृतमह'मिति सौन्दर्यसौकुमार्यादिना स्वप्रति-स्पर्धितामरसप्रसूनसमुदायविषयकरोषेणारुणमिव स्थितम् उपधानीकृतं श्रीरङ्गेशयितुः शयानस्य कराम्भोजं शरणमुपागमन्। एवमेव श्रीरङ्गेशयतुरुपधानीकृतभुजः किरीटमुभयविभूतिसाम्राज्यसूचकं मकुटं संस्पृश्यअबहुश्रुतविद्वदपशदहृदयसमुदयत्परत्वशङ्कास्पदयो ब्रह्मरुद्रयो-रधिपतित्वात् सर्वेश्वरत्वानुरूपं भवतीति वदतीति जानुपर्यन्तविन्यस्तः उपधानीकृतादन्यः बाहुः पादाम्बुजयुगळं संस्पृश्य निर्दिश्य शेषभूतानां स्वयंभूप्रभृतीनां सर्वोत्कृष्टं शरणमिति स्फटं ब्रूते । नाम श्रीरङ्गशायि-भुजयोरेकः सर्वशेषित्वानुरूपमिदंकिरीटमिति स्पृष्ट्वा निर्दिशति, तदन्यस्तु शेषभूतानां तदीयं पादाम्बुजं शरणमिति निर्दिशतीति मधुरमुपावर्णयन्। श्रीरङ्गनाथवक्षःस्थलवर्णनावसरे "अलर्मेल्मङ्गै-युरमार्बा" इति शठारिमुनेः वचनानुसारं लक्ष्मीललितगृहं रङ्गसर्वंसह उरः उपासे इति तथैव स्वजनकानां श्रीकूरेशमिश्राणां श्रीवैकुण्ठस्तव-

श्लोकानुगुणं "सम्पत्तु किं पुनरितो न वदान्यमन्यं मन्ये त्वमेव खलु मन्दिरमिन्दिरायाः" (४८ श्लोकः) इति वक्षोऽनुभवः स्मर्यते। लक्ष्म्याः भोगशयनमिन्दिरमिदं भगवद्वक्ष इति वक्षोऽनुभवः विचित्रशयन-गृहप्रदर्शनमत्र कृतवन्तः। अथ द्वादशोत्तरशतसंख्याके श्लोके मन्थरमथ्यमानो दधित्वेनानुभवो वक्षसः कृतवन्तः। तदनु

'वक्षःस्थल्यां तुलसिकमलाकौस्तुभैर्वैजयन्ती
सर्वेश्वरत्वं कथयतितरां रङ्गधाम्नस्तदास्ताम्।
कूर्मव्याघ्रीनखपरिमलत्पञ्चहेती यशोदा
नद्धा मौग्ध्याभरणमधिकं नस्समाधिं धिनोति।।' (११३)

श्रीरङ्गराजवक्षःस्थलावस्थितसर्वेश्वरत्वसूचकाभरणेभ्योऽवतारसूचका-न्याभरणान्येव अस्मादृशभावबन्धात्यन्तभोग्यानीति बालाभरणग्राम्या-भरणसमूहं नोभयं शमयतीति प्रशंसन्ति स्म। अथ भट्टपादाः श्रीरङ्गनाथस्योदनाभ्यनुभवं प्रदर्शयन्ति। मम जगदण्डमण्डली कियानभर इत्यतृप्तितः विभोः उदरं कृशितमिव वर्तते इति संवर्तसमयविन्यस्तसमस्तब्रह्माण्डमण्डलस्य श्रीरङ्गराजतुन्दस्य स्वत एव सामुद्रिकलक्षणानुगुणकार्श्यवैशिष्ट्यमतृप्तिनिमित्तकमित्युत्प्रेक्ष्यते। श्रीरङ्गशायितुन्दनाभिपङ्कजे उभे च तदीयं जगद्रक्षाभिनिवेशातिशयं प्रकाशत इति निष्कृष्टोभिप्रायः युक्ततम एव। तदनु रङ्गमहेशितुः तुन्दावलम्बि वळित्रयं त्रिविधचिचिद्द्वन्द्वं विगणयदिवैश्वर्यं व्याख्याति। दामोदरत्वकरः किणः प्रणतवशतां ब्रूते उदरबन्धनं तदुभयगुणाष्टकं पट्टंकिलेति यशोदाविरचितदामनिबन्धनबन्धनाङ्कनं तु सौलभ्य-सूचकम् उदरभबन्धनं तु परत्वसौलभ्योभयसूचकमिति स्तोत्रयामासुः। अथ श्रीमन्तः पराशरभट्टपादाः भगवतः देवाधिदेवस्य रङ्गभर्तुः नाभीपद्मो भगवत्परत्वं करतलामलकीकृत्य स्पष्टं निदर्श्य सिद्धान्तयतीति प्रदर्शयन्ति।

'त्रयो देवास्तुल्यास्त्रितयमिदमद्वैतमधिकं
त्रिकादस्मात्तत्वं परमिति वितर्कान् विघटनम्।
विभोर्नाभीपद्मो विधिशिवनिधानं भगवत-

स्तदन्यद्भ्रूभङ्गी परिवदति सिद्धान्तयाति नः।।' (११६)

इत्यनेन श्लोकेन बहवः पक्षाः त्रिमूर्तीनां परत्वविषये विवदन्त इति निरूपयन्तः "आत्मैक्यं दैवतैक्यं त्रिकसमधिगतातुल्यतैक्यं त्रयाणामन्यत्रैश्वर्यमित्याद्यनिपुणफणिती आद्रियन्ते न सन्तः" इति हि सत्यम्। वेदान्ताचार्याः इमं श्लोकं सर्वात्मनाऽनुगच्छन्ति। यतो हि श्रीपराशराः तिसृणां समत्वं व्यक्त्यैक्यं त्रिष्वन्यतमस्य परत्वं त्रिकाद्बहिर्भूतस्य तुरीयस्य परत्वं इत्येवं बहुधा विप्रतिपत्तीः शमयन्तः ब्रह्मरुद्रावत्र-पुत्रपौत्ररूपावरत्वं तयोस्तदुत्पन्नत्वतन्नियाम्यत्वादि च स्पष्टं निस्संशयं प्रदर्श्यन्ते। भगवच्छब्दो विभुशब्दश्च निरङ्कुशैश्वर्यद्योतकाविति प्रादर्शयन्। न परत्वं तयोः किन्तु भगवद्भ्रूभङ्गीपरत्वमिति चमत्कार-प्रदर्शनं, न परत्वं किन्तु परवत्वमिति वदन्तः तिष्ठन्तु नाम दर्शन-स्थापकाः ऋषयः आचार्याश्च। इयं नाभिरेवालं भवति । प्रत्यक्षप्रमाणेनास्माकं सिद्धान्तयति । नाभिश्च मध्यस्था। मध्यस्थोक्तेः श्रद्धेयत्वमेव। शब्दश्च नाभेरेव प्रथममुत्पद्यते । "नाना चराचर-विधायकजन्मदेशनाभीपुटाय पुरुषाय नमः परस्मै" इति चम्पूरामायण-श्लोकेऽपि स्मर्यते। अत्र कश्चन प्राचीनश्लोकः विद्यते।

"यन्नाभीसरसीरुहान्तरपुटे भृङ्गायमाणो विधिः।
यद्वक्षःकमलाविलाससदनं यच्चक्षुषी चेन्दुनौ।।
यत्पादाब्ज निसृताऽमरनदी शम्भोश्शिरो भूषणम्।
यन्नामस्मरणं धुनोति दुरितं पायात्स वः केशवः।। इति।

दयाशतके तु -

'त्वयादृष्टस्तुष्टिं भजति परमेष्ठी निजपदे।
वहन्मूर्तीरष्टौ स जयति मृडानीपरिभृढः।।' (दयाशतकम्-६६)

इत्ययं श्लोकोऽपि नारायणपरत्वबोधकत्वेनात्रानुसन्धीयते। कथं भगवतः परत्वसिद्धान्तम्? इत्युक्ते पुत्रपौत्रौ भगवतोऽपि व्यापकौ स्याताम्। पितुः परः पुत्रः पौत्रश्च भूयो दृश्यते। न पुत्रपौत्रमात्रत्वादवरत्वनिर्णयः साधीयान् भवति। नाभीपद्मे रंहति रङ्गायतनाब्धेः इति नाभीपद्मः । एतत् जगदुतेक्षिप्य प्रेक्षितुम् उद्यद्भ्रमिभूयं रंहतीति स्तुवन्ति स्म।

नामरूपान्तरप्रतिपत्तिरूपसृष्टिसन्दर्भे यो रंहति इति शब्दप्रयोगः स तार्तीयप्रथमसूत्रस्मारकः तदन्तरप्रतिपत्तौ रंहतीति आश्चर्यवर्णनं पुलकयति। इत्थं नाभेरावर्तोपम्यवर्णनं कृतवन्तः। तदधः ऊर्वोरवतीर्यतदौपम्यान्वेषणवर्णनादिकं बह्वपायमत्यन्तसाहसम्। मधुकैटभस्य मदमिव रम्भाकरभकरीन्द्रकराभिरूप्यदर्पं स्फुटमिव परिभूय गर्वगुर्वोः रङ्गकुञ्जरोर्वोः किमुपमीमहि इति तदुपमानान्वेषणप्रवृत्तिः केवलं परिभवमेवापादयेत्। अतः विरमाम तत्प्रयत्नादिति प्रकटयन्ति। तदनु किरीटान्तिसंवादि चातुर्यनीवीलसद्रत्नकाञ्चीकलापानुलेपं रङ्गबन्धोः पीताम्बरं महाभ्रंलिहन्मेरुमाणिक्यसानुरिवाभातीति श्रीरङ्गराजस्य समुद्रत्वेनानुभवः। भगवन्नीलविग्रहे पीताम्बरं सागरे सौवर्णस्थलकान्तिपरिवेष इव सन्ध्यारक्तमेघमालेव विद्युन्मालेव च भातीत्यनुभवः क्रान्तदर्शित्वं प्रदर्शयति। पीताम्बरं पिबति रङ्गधुरन्धरस्येति कथनं लोचनाभ्यां पिबन्निव मनसा पानवर्णनं स्वरसं भवति। श्रीमद्रङ्गतुङ्गालयस्य वैभूषण्यां निमग्ना विष्वग्व्यापिनी अवयवसमुदायसम्बन्धिनी कान्तिः क्वचित्प्रदेशे उद्धतगतिस्सती जानुद्वन्द्वमिति वार्तया व्यवहारेण युक्तो विवर्तः आवर्तो जातः । यथा कस्मिंश्चित्प्रवाहे प्रवाहान्तरसम्मेलने सत्यूर्ध्वमुखावर्तादि वर्तते तथा श्रीरङ्गराजाभरणकान्तिप्रवाहेण दिव्यावयवकान्तिप्रवाहमेलने जातमूर्ध्वावर्तद्वयं जानुद्वयत्वेनाव्यवह्रीयत इति श्रीवेङ्कटार्यव्याख्या रसमयी भवति। अथ श्रीरङ्गनाथस्य जङ्घानुभवः पराशरार्योः अनुभूयते। श्रीरङ्गे शयानस्य जङ्घे श्रीभूमिभ्यां करकमलैः लाल्यते। श्रीभूम्यामर्शहर्षकण्टकिते श्रीरङ्गेशयजङ्घे तत्केळिनळिनमांसलनालद्वयललितं आचरत इति वर्णयन्ति स्म। "सप्रेमभीतिकमलाकरपल्लवाभ्यां संवाहनेऽपि समधिक्लममादधानौ" इति प्रतिवादिभयङ्करअण्णासूक्तिः स्मरणीयतां भजते। ललितचरणं नटजङ्घयोर्युक्तम्। तदनु पादाम्भोजानुभवं

'वन्दारुबृन्दारकमौळिमालायुञ्जान चेतः कमलाकरेभ्यः।
सक्रान्तरागाविव पादपद्मौ श्रीरङ्गभर्तुर्मनवै नुवै च।।'

इति श्लोकद्वारा प्रपञ्चयन्ति स्म। प्रणतसुरकिरीटरत्नरागसंक्रान्तिः उच्यते। युञ्जनानां भक्तियोगनिष्ठानां भगवत्पादाम्भोजविषयनिबिड-रागः पादाम्भोजे संक्रामति। कमलायाः सजातीये पदाम्भोजे रक्तिः तस्याः करौ सरसिजे ताभ्यां रागसङ्क्रन्तिः। 'तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम्' (सुबाल. ८) इति पादपद्मविषयां तां श्रुतिं ज्ञापयन्ति स्म। योगिमनोयुक्तत्वेन लक्ष्मीकरलालितत्वेन च मनवै न पादाम्भोजमात्रम्। "तद्विप्रासो विपन्यव" इति सातत्येन स्तवनान्वयित्वेन मनोरथकाष्ठा सूचिता। अथ

'यद्बृन्दावनपण्डितं दधिरवैर्यत्ताण्डवं शिक्षितं
यल्लक्ष्मीकरसौख्यसाक्षिजलजप्रस्पर्धमानर्धियत्।
यद्भक्तेष्वजलस्थलज्ञमपि १२यद्दूत्यप्रसङ्गप्रियं
तद्विष्णोः परमंपदं वहतु नः श्रीरङ्गिणो मङ्गळम्॥' (१२४)

श्लोकेऽस्मिन् बृन्दावनपण्डितस्य नन्दकुमारस्य दध्ना निमन्थमुखरेण निबद्धतालमिति नटवरबालस्य पदं मङ्गळं वहत्विति प्रार्थयन्ति। बृन्दावनं कृत्स्नमनेन क्रान्तम्। तत्रासदृशं पाण्डित्यमस्य। बृन्दावन-सञ्चरणेन ताण्डावाभ्यासेन श्रान्तं पदं संवाह्यन्ते दयितया लक्ष्म्या सुकुमारतमकराभ्याम्। अनेनात्यन्तमार्दवव्यञ्जनं पादाम्भोजस्य। तेन च बृन्दावनचरणार्हत्वं नर्तनसमकाठिन्यार्हत्वञ्च व्यज्यते। श्लोकेऽस्मिन् "यद्भक्तेष्वजलस्थलज्ञम्" इति प्रयोगः रसमयः। उच्चनीचभेदानभिज्ञम्। सर्वत्रसमम्। सर्वसुलभम्। जलजं जल एव रूढं भवेत्। इदं तु जले स्थले च रूढमूलं भवति। उभयोः स्पर्धायामेतद्विशेषं द्योतयितुं जलजशब्दग्रहणं पद्मे। पदे च जलस्थलोभयवर्णनत्वञ्च। जलं निम्नप्रदेशे स्यात् निम्नं गच्छन्त्यापः। स्थलञ्चोच्चत्वद्योतकम्। पण्डितस्येदमेकं ज्ञानमर्षणीयम्। "दूत्यप्रसङ्गप्रियम्" इति पदेन उच्चनीचत्वाज्ञत्वं न केवलम् उच्चनीचव्यक्तिषु किं तु उच्चनीचव्यापारेषु। दूत्यमिति निकृष्टं 'न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः' (श्रीमद्रामायणम्, ५-३९-३९)। अत एव 'मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ' (श्रीमद्रामायणम्, ५-३९-३८) इति

नवव्याकृतपण्डितेन हनूमता प्रत्यापादि। दूत्यप्रसङ्गे रुचिः तदवसरप्रतीक्षा सूचिता च। निकृष्टतमव्यापाररूप दूत्यसक्तत्वमुक्तम्। विष्णोः पदं दूत्यादि सर्वक्रियान्वयि। अत एव श्रीविष्णुचित्तकुलनन्दन-कल्पवल्ली "अन्रु इव्वुलगुं अळन्दाय् अडिपोत्ति।।" इति पादारविन्दयोः मङ्गळमुक्तवती श्रीरङ्गिणः विष्णोः परमं पदं नः मङ्गळं वहतु इति जगन्मण्डलवहत्वं पादस्य। एते हि सर्वलोकस्य योगक्षेमं विधास्यतः इति वशिष्टः पादुकाविषये न्यवेद्यत । अत एव वेदान्ताचार्याः -

'नीचोऽपि हन्त मम मूर्धनि निर्विशेषं
तुङ्गेऽपि यन्न विशते निगमोत्तमाङ्गे।
प्राचेतसः प्रभृतिभिः प्रथमोपगीतं
स्तोष्यामि रङ्गपतिपादुकयोर्युगं तत्।।'

(पादुकासहस्रम्, ५)

स्वकीये पादुकासहस्रे प्रस्तावपद्धत्यां पञ्चमे श्लोके प्रपञ्चितवन्तः। अथ पञ्चविंशत्युत्तरशततमे श्लोके श्रीमन्तः पराशरभट्टाः श्रीरङ्गनाथ-दिव्यचरणारविन्दद्वन्द्वं सेवन्ते। तद्यथा -

'शिञ्जानश्रुतिशिञ्जनीमणिरवैर्वज्रारविन्दध्वज-
च्छत्रीकल्पकशङ्खचक्रमुकुरै स्तैस्तैश्च रेखामयैः।
ऐश्वर्येण जयन्ति त्रिविक्रममुखं घुष्यद्भिराम्रेडितं
श्रीरङ्गेश्वरपादपङ्कजयुगं वन्दामहे सुन्दरम्।।' (१२५)

इति स्तुवन्तः वज्रपद्मध्वजादिरेखायोगेन परममाङ्गलिकत्वमुच्यते। श्रीविष्णुसूक्तानुगुणं रचितोऽयं श्लोकः इति वक्तुं शक्यते। 'त्रीणि पदा विचक्रमे' 'यः पार्थिवानि विममे रजांसि' (विष्णुसूक्तम्) इत्यादिपादविजयोद्घोषिकाःश्रुतयः कीर्त्यन्ते। यतो हि शठकोप-दिव्यसूरयः "अन्रुञ्ञालमळन्दैप्पिरान्" (तिरुवा. ३-३-८) इति वामनावतारं त्रिविक्रमपराक्रमं स्तुवन्ति, तद्वदेव सर्वेऽपि दिव्यसूरयः कीर्तितवन्तः। भगवती गोदादेवी स्वकीये "तिरुप्पावै" दिव्यप्रबन्धे "ओङ्गि उळहळन्द उत्तमन् पेर्पाडि" (तिरुप्पावै, ३) इति, " अन्रु इव्वुलकुम् अळन्दाय् अडिपोत्ति" (तिरुप्पावै, २४) इति मङ्गळाशासनं कृतवती खलु। तदपि

मनसि भावयन्ति भट्टपादाः। पूर्वाचार्येषु महाप्रभावशालिनां यामुनदेशिकानां स्तोत्ररत्नानुगुणं च "कदा पुनः शङ्खरथाङ्गकल्पक-ध्वजारविन्दाङ्कुशवज्रलाञ्छनम्" इति क्रमेण, एवं स्वपितृचरणानां भक्ताग्रगण्यानां श्रीकूरेशमिश्राणां वैकुण्ठस्तवमाधारीकृत्य

"वज्राङ्कुशध्वजसरोरुहशङ्खचक्र-
मत्सीसुधाकलशकल्पककल्पिताङ्गम्,
त्वत्पादयुगळं विगलत्प्रभाभिर्भूयोऽभि-
षेक्ष्यति कदानु शिरो मदीयम् ।।"
(श्रीवैकुण्ठस्तवः, ७१)

इत्यादिकञ्च वारं वारं ध्यत्वा ध्यात्वा दिव्यसामुद्रिकं पादारविन्द-द्वन्द्वसुन्दरं शरणमुपगताः। अत्र सौन्दर्यमेकमलमस्मिन् वशीकर्तुमिति सुन्दरपदनिवेशः बहुसुन्दर एव। अथानन्तरे श्लोके -

'दिवा निशि च रङ्गिगणश्चरणचारुकल्पद्रुम-
प्रवालनवमञ्जरीः नखरुचीर्विगाहेमहि।।' (१२६)

इत्यनेन पादाङ्गळ्यः पादनखनि चानुभूयन्ते। नखमणिचन्द्रिकया निरस्ततापे इति श्रीशुकानुभवः। अनेन श्लोकरत्नेन भगवद्विग्रहानुभव-प्रतिपादकपूर्वशतकञ्च समाप्तप्रायम्। ज्ञानयज्ञान्तेऽवभृथः। भगवत्पदा-ङ्गुळिप्रसृताया गङ्गयास्तन्नखकान्तिभ्यश्चान्यत्र कुत्रवावभृथसम्भवः। यादृशो यज्ञः तादृशीयमवगाह्यमाना नदी चरणयुगवन्दनं कृतम्। तत्फलञ्च शीतह्रदे ब्रह्मण्यवगाहः। न तत्र दिवारात्रिविभागः। सकृद्दिवा भवति। गङ्गा त्रिपथगेति प्रसिद्धा। अहं दशेभ्योऽप्य-ङ्गुळीभ्यो बहुमखीप्रसृत्य सर्वान् लोकान् पावयानीति प्रसृते वेत्युत्प्रेक्ष्यते। पूर्वं त्रिविक्रमस्य भगवतो वामपादाङ्गुष्ठनखनिस्सृता जाह्नवीत्वेकप्रवाहेति प्रसिद्धिः। तादृश्यहं बहुप्रवाहा सती भुवनानि पूतानि करवाणीति मत्वा सर्वाङ्गुळीभ्यः झळज्झळितस्य सध्वनिकं निस्सृतस्य जाह्नव्याः लहरीवृन्दस्य तरङ्गपङ्क्तेः सन्देहदा संशयावहा बह्वीभ्योऽङ्गुळीभ्यो बहुमुखं निष्यन्दमाना गङ्गातरङ्गपङ्क्तिसदृशीत्यर्थः। एवं प्रसिद्धगङ्गावगाहनादपि प्रणामकालीनश्रीरङ्गशायिनखप्रभावगाहनमेव

महतां मुहुः प्रार्थनीयमित्यभिप्रायः प्रकटीकृताः।अत्र साहित्याचार्यस्य राजानकानन्दवर्धनस्य ध्वन्यालोकमङ्गळश्लोकमपि स्मरामः।

'स्वेच्छाकेसरिणस्वच्छस्वच्छायासितेन्दवः।
त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः।।'
(ध्वन्यालोकः, १-२)

इति दिव्यपादारविन्दनखस्मरणं प्रपन्नजनार्तिशमनं भवतीति भावयामः। अत एव दिवा निशि च नवमञ्जरी नखरुचीः विगाहेमहि इति श्रीपराशरार्याणामनुभवः द्वयमन्त्रानुभव एव।

**श्रीरङ्गराजस्तवपूर्वशतकसमापनेऽपूर्वः मङ्गळश्लोकः -**

श्रीमन्तः पराशराः श्रीरङ्गराजस्तवं शतकद्वयरूपेणानुगृहीतवन्तः। यतो हि श्रीवैष्णवसिद्धान्तप्रतिपादकानि शास्त्राणि ग्रन्थाश्च द्वयमन्त्रविवरणैकप्रयोजनाः इति निस्सन्देह एव। द्वयमन्त्रे खण्डद्वयं विराजते। अतः पूर्वखण्डाय पूर्वशतकम् एवम् उत्तरखण्डाय उत्तरशतकगुम्भनं समञ्जसमेव। प्रायशः शतक इति प्रयोगेण शतसंख्याकानां श्लोकानां समूहः इत्यर्थोऽवगम्यते। परन्तु अस्माकं ग्रन्थरचयितारः भट्टपादाः शताधिकानि नक्षत्रसंख्यानि पद्यानि श्रीरङ्गेन्दोः समर्पितवन्तः। यतो हि इन्दोः नक्षत्रसंख्या समुचिता। रङ्गेन्दोः शतकसंख्या नक्षत्रसंख्यया समुच्चीयते। अत एवान्तिमश्लोकारम्भवेलायां -

'श्रीरङ्गेन्दोः पदकिसलये नीलमञ्जीरमैत्र्या
वन्दे वृन्तप्रणयिमधुपव्रातराजीव जैत्रे।
नित्याभ्यर्चानतविधिमुखस्तोमसंशय्यमानै-
र्हेमाम्भोजैर्निबिडनिकटे रामसीतोपनीतैः।।'
(श्रीरङ्गराजस्तवः, १२७)

अत्र पादाम्भोजनिकटे अम्भोजान्तराणि निबिडं दृश्यन्ते इति कथ्यते। एवमेव मन्त्ररत्नोपबृम्हणत्वे प्रवृत्ते श्रीरङ्गराजस्तवे पूर्वखण्डविवरणरूपपूर्वशतकेन गुरुपरम्परावन्दनपूर्वकं 'श्रीस्तनाभरणं तेजः श्रीरङ्गेशयमाश्रये' इति संक्षिप्तमर्थं विस्तरशः प्रतिपाद्य 'चरणौ शरणं

प्रपद्ये' इत्यंशं बहुशो विवृतमिति श्लोकेऽस्मिन् संक्षिप्य परिसमापयन्ति भट्टसार्वभौमाः। नीलमञ्जीरमैत्र्यावृन्तप्रणयिमधुव्रातराजीवजैत्रनित्याभ्यर्चानतविधिमुखस्तोमसंशय्यमानैः रामसीतोपनीतैः होमाम्भोजैः निबिडनिकटे श्रीरङ्गेन्दोः पादकिसलये वन्दे इति शरणागतिं कृतवन्तः। अपरिमितविभवाश्चक्रवर्तिनः स्वर्णपुष्पाणि समर्पयेयुः 'आ प्रणखात् सर्व एव सुवर्णः' इति हिरण्मयस्य पुरुषस्य पादाम्भोजं हेमाम्भोजं भवति। तस्मै तदनुरूपस्वर्णाम्भोजसमर्पणमुचितम्। अत्र शतकनिगमने द्वयानुगामित्वम्। अस्मिन् श्लोके चरणयोः द्वित्वग्रहणं पूर्वश्लोकद्वयगृहीतैकत्वहानेन। रामसीताग्रहणेन "सह पत्न्या विशालाक्ष्या नारायणमुपागमत्" इति नारायणत्वस्मरणमपि द्वयं प्रत्यभिज्ञापयति। निरतिशयप्रसन्नो भगवानस्मिन्नवसरे प्रपन्नो भवतु इति, एवमेव पत्नीसहितेन दाशरथिना यथाविधि समाराधनसमये ताभ्यां समर्पितैः हेमाम्भोजैः निरन्तरान्तिके अत्रिमुनिपत्न्यनसूया समर्पितदिव्याङ्गरागमाल्यादयो यथा वैदेहीमकुटशोभा एव शोभयन् तथा दाशरथिजानकीभ्यां समर्पितानि दिव्यानि तपनीयकमलान्यम्लानान्येवाद्यापि वर्तन्ते इति दिव्याभिप्रायः। एवंभूते श्रीरङ्गेन्दोः पदकिसलये संसारार्णवमग्नाशरण्यकृत्स्नजनसमाश्रयणीयत्वाय स्वकीयनिर्हेतुकनिरवधिककृपयैव श्रीरङ्गशायितामङ्गीकृतवतश्चन्द्रस्य पादपल्लवौ इन्दुत्वनिरूपणेन कारुण्यसाधुरसपरिपूर्णहृदयतया स्वपादाश्रिततापनिवर्तकत्वञ्च प्रतीयते। ततश्च समाश्रयणीयसौकर्यापादकत्वेन समाश्रितकार्यापादकत्वेन च पूर्वाचार्यैर्विभक्ताः कृपापरिपाकभेदाः सौशील्यवात्सल्यसौलभ्यप्रभृतयो ज्ञानशक्त्यादयश्च श्रीरङ्गशायिनि विशदतरं प्रकाशन्त इति साम्प्रदायिकानां पन्थाः। पदयोः किसलयत्वनिरूपणं चात्यन्तभोग्यतयोपेयभूतयोरेवाकिञ्चनजनाभीष्टसाधनोपायत्वद्योतनायेति एवंभूते 'पदकिसलये शरणं प्रपद्ये' इति श्रीरङ्गनाथं प्रपत्तिमाचरितवन्तः। "श्रीमन्नारायणचरणौ शरणं प्रपद्ये" इति पूर्वखण्डं श्रीरङ्गराजस्तवरूपेण पूर्वशतकेन, श्रीरामानुजार्याज्ञया विशिष्टाद्वैतसिद्धान्तस्थापनाय च लोकोत्तररूपेण

विविधवेदान्तप्रमाणैः पूर्वाचार्यश्रीसूक्त्यनुगुणं विरच्य श्रीरङ्गनाथचरणयोः प्रेम्णा भक्त्या विनयेन च समर्पितवन्तः इति शम्।।

।। श्रीरङ्गनाथो जयतु ।।

**पूर्वशतकनिगमनम् -**

श्रीमन्तः पराशरार्याः सम्पूर्णेऽपि पूर्वशतके भगवन्तं श्रीमन्नारायणं गुरुपरम्परावन्दनपूर्वकं प्रणमेमुः। यतो हि भगवतः समीपं भागवतानाश्रित्यैव गन्तव्यमिति सिद्धान्तः। अत एव आचार्यान् पुरस्कृत्य श्रीमहालक्ष्म्याः पुरुषकारमपि प्रार्थितवन्तः। अकारार्थः अकारवाच्यः "अव-रक्षणगतिहिंसादिषु"इति धातोरुत्पन्नस्यास्याकारस्य जगत्सृष्ट्यादि-कर्ता विष्णुः। स एव स्वरङ्गराजस्तवस्य नायकः इति, मकारार्थत्वेन पञ्चविंशोऽयं पुरुषः, पञ्चविंश आत्मा भवति,

'भूतानि च कवर्गेण चवर्गेणचेन्द्रियाणि च।
टवर्गेण तवर्गेण ज्ञानगन्धादयस्तथा।
मनः पकारेणैवोक्तं फकारेण त्वहंकृतिः ।
बकारेण भकारेण महान् प्रकृतिरुच्यते।
आत्मा तु स मकारेण पञ्चविंशः प्रकीर्तितः।।'

"मकारो जीववीचकः" इति विष्णोः जातमात्मवस्तु तच्छेषभूतमिति, "सर्वं खल्विदं ब्रह्म' (छा. ३-१४-२) 'तज्जलानीति शान्त उपासीत", "मत्तः सर्वमहं सर्वम्" इति मकारवाच्यं चेतनजातं विष्णोश्शेषभूतमिति ज्ञापितवन्तः मकारार्थस्य जीवस्य शेषभूतं इदं शुद्धसत्त्वमिश्रसत्त्व-सत्त्वशून्यभेदेन त्रिविधमचेतनञ्च वैष्णवमिति श्रीरङ्गराजस्तवे पूर्वशतकद्वारा ज्ञापयन्ति स्म। एवमेव 'तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः' इत्यादिस्थानप्रमाणेन अवधारणार्थक उकार इति अनयोः अकारमकारवाच्ययोः परमात्मजीवात्मनोः शेषशेषिभावरूपसम्बन्धम् अनन्यार्हं नियमयतीति सर्वत्रापि पूर्वशतके श्रीरङ्गराजं प्रार्थितवन्तः। एतादृशार्थप्रणवः चेतनस्य भगवदनन्यार्हशेषत्वरूपमर्थं सम्यक् प्रतिपादयतीति सूचितवन्तः। अकारेण शेषी भगवान् श्रीरङ्गनाथ एवेति मकारेण शेषरूपो जीवः इति, अनयोः शेषशेषिवैलक्षण्यं परामर्शितवन्तः।

एवमेव उपायस्वरूपम् चतुर्थ्या पुरुषार्थस्वरूपम् अन्यशेषत्वशङ्कारूपेण विरोधिस्वरूपमुक्तवन्तः इति कृत्वा श्रीरङ्गराजस्तवः अर्थपञ्चकबोधक एव। तथैव नारायणशब्दविवरणाय भगवद्रामानुजाचार्याणां श्रीसूक्त्यनुगुणं "अखिलहेयप्रत्यनीक" इत्यारभ्य "निखिलजगदुदयविभवलयलीलेति नारशब्देनोक्तसमूहबहुत्वं प्रपञ्चितवन्तः। भोगोपकरणानि ज्ञानानन्दामलत्वज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि, वात्सल्यस्वामित्वसौशील्यादयः गुणप्रकाशकाः परव्यूहविभवान्तर्याम्यर्चावताररूपविग्रहाः विग्रहानुगुणसौन्दर्यादयः किरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुराद्यपरिमितदिव्यभूषणानि" आभरणायमानसुदर्शननन्दकपाञ्चजन्यकौमोदकीशार्ङ्गदिव्यायुधसमूहाः, दिव्यमहिष्यः, भगवतः पादारविन्दसंवाहिन्यः, भगवत्पादयुगळम्, पादुकाद्वयम्, अनन्तकान्त्यावारुणीपरिषद्वृन्दः वैनतेयरुद्रासुकीर्तयःविष्वक्सेनसूत्रवतीमिथुनजयत्सेनहरिवक्त्रादयः चण्डप्रचण्डभद्रसुभद्रजयविजयधातृविधात्रादयः कुमुदकुमुदाक्षवामनपुण्डरीकशङ्खकर्णस्पर्शनेत्रसुमुखसुप्रतिष्ठादिसंवाहनपरिवारः मुक्तपुरुषाः, चन्द्रपुष्करिण्यादिदिव्यारामप्रदेशाः, भगवती कावेरीनदी, भगवतः छत्रचामरादिपरिच्छदः, सप्तप्रकारभूयिष्टं श्रीरङ्गमहाक्षेत्रं, द्वयमन्त्रपूर्वखण्डरूपेणैव उपवर्णितवन्तः। प्रणवरूपिणि श्रीरङ्गनाथे शेषत्वं नमसि पारतन्त्र्यम्, नारायणपदे कैङ्कर्यं च विवृतवन्तः श्रीपराशराः श्रीरङ्गनाथ एव सर्वाधारकः इति निरवधिकमाहात्म्यवानिति, निखिलहेयप्रत्यनीक इति, सर्वकारणभूत इति, सर्वान्तरात्मेति, सर्वविधबन्धुरिति, सर्वनियन्तेति, कल्याणैकतान इति, सदैकरूपेति, समस्तकल्याणगुणात्मकः इति, सर्वप्रकारेण भगवच्छेषत्वमेवात्मनः निजस्वरूपः इति सकलविधकैङ्कर्यविधयः प्रार्थितवन्तः। भगवद्रामानुजाचार्याणां सिद्धान्तस्थापनाय शरणागतिशास्त्रं सर्वसुलभं कर्तुं श्रीकूरेशतनयाः श्रीमन्तः पराशरभट्टार्याः श्रीवैष्णवसिद्धान्ते महोपकारं चक्रुः। द्वयमन्त्रविवरणाय एतावान् महाप्रबन्धः पूर्वतनाचार्यैर्वा भट्टार्याणामर्वाचीनाचार्यैर्वा न निर्मितमिति

सम्प्रदायनिषठातृणामभिप्रायः। भगवद्रामानुजाचार्याणां पदाश्रितेषु परमाग्रगण्याः श्रीकूरेशमिश्राः भवन्ति। श्रीकूरेशाः ज्ञानभक्ति-वैराग्यखनयः पञ्चस्तवान् भगवन्तं प्रति यथा विज्ञापयामासुः तद्वदस्माकं श्रीभट्टपादाः पञ्चस्तवसारांशत्वेन द्रविडाम्नायसुधासूक्तिकलितेनेव श्रीभाष्यादिसिद्धान्तसारमिव भगवतः विभूत्यादिकम् आत्मनः नित्यदास्य-स्वरूपं द्वयमनन्त्रविवरणमिव शतकद्वयं विभूतिद्वयनायकाय श्रीमते रङ्गनायकसार्वभौमाय तत्पादारविन्दयोः सम्र्पणमकार्षुरिति श्रीरङ्गराजस्तवव्याख्यातृणां दिव्याभिप्रायः। श्रीपराशरभट्टार्याणां परमानुग्रहेण श्रीरङ्गराजस्य दिव्यवात्सल्येन च दासजनोऽयं "गमिष्यामुपहास्यताम्" (रघुवंशः, १-३) इति काळिदासवचनं जानन्नपि गुणानुभवरूपेणैव पूर्वशतकस्याध्ययनं कृत्वा तत्तु श्रीवेङ्कटाचल-नायकस्य परब्रह्मणः दिव्यचरणारविन्दयोः समर्पयति।।

इति पूर्वशतकनिगमनम्।।

**।। इति पञ्चमः महाप्राकारः समाप्तः ।।**

।। सर्वं श्रीकृष्णार्पणमस्तु ।।



# षष्ठमहाप्राकारः ।।

## श्रीरङ्गराजस्तवस्य उत्तरशतकसमीक्षा ।

श्रीवेङ्कटाचलाधीशं श्रियाध्यासितवक्षसम् ।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे ।।
श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः ।
श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ।।
दिशन्तु मे देव सदा त्वदीयाः दयातरङ्गानुचराः कटाक्षाः ।
श्रोत्रेषु पुंसाममृतं क्षरन्तीं सरस्वतीं संश्रितकामधेनुम् ।।
श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गळम् ।।
अकम्पनीयान्यपनीतिभेदैरलङ्कृषीरन् हृदयं मदीयम् ।
शङ्काकलङ्कापगमोज्ज्वलानि तत्त्वानि सम्यञ्चि तव प्रसादात् ।।

## भूमिका

अथ श्रीमन्तः पराशरभट्टार्याः पूर्वशतके द्वयमन्त्रस्य पूर्वखण्डविवरणमद्भुताद्भुतं विश्वश्रेयसे सचमत्कारं विरच्य सम्प्रति उत्तरवाक्यविवरणाय प्रारभमाणाः "ब्रह्मविदाप्नोति परम्" (तै. आर. १) इति सर्वस्मात् परस्यैव प्राप्यतया सर्वसमाश्रयणीयत्व-निमित्तकसौलभ्यातिशयजुषश्रीरङ्गराजस्यैव सर्वस्मात्परत्वं विस्तरेण प्रतिपादयिष्यन्तः सन्तः प्रथमतः शास्त्रैकसमधिगम्यत्वात् परतत्त्वस्य तादृशशास्त्रप्रदानमपि अपारकृपावतो भगवतः कृत्यमिति उत्तरशतकं प्रारभन्ते।

अस्माकं समीक्षायां षष्ठः प्राकारोऽयम् । भगवान् श्रीरङ्गनाथः पञ्चमप्राकारे साक्षात्कृतः । तस्य परमात्मनो विभूत्यादिकं, कल्याण-गुणगणाश्च, श्रीरङ्गक्षेत्रमाहात्म्यं, भगवद्वर्णनं, शरणवरणपद्धतिः निरूपिताः । द्वयमन्त्रपूर्वखण्डत्वेनैतत् विवृण्वन्तोऽधुना षष्ठे प्राकारे अस्मिन्नुत्तरखण्डे - "श्रीमते नारायणाय नमः" इति पदत्रयं विवृण्वन्ति स्म । इत्थं श्रुतिस्मृतीतिहासपुराणश्रीपाञ्चरात्रदिव्यप्रबन्धसम्मतेन स्वसिद्धान्तमार्गेण पत्नीपरिजनपरिच्छदैः विभूतिभिश्च श्रीरङ्गराजोऽभिष्टुतः । पुनरपि तेनैव मार्गेण स्तोतुमनाः तस्य परमतनिराकरण-सापेक्षत्वात् प्रथमं परमतनिराकरणमुपक्रमन्ते । तन्निराकरणस्यापि सर्वेश्वराभिमुख्येन प्रवृत्तस्तुतौ पर्यवसानं द्रष्टव्यम् ।. अंतः श्रीमन्तः पराशरभट्टार्याः वेदार्थनिर्णयं कुर्वन्तः वेदबाह्यमतनिरसनमपि चक्रुः । वेदार्थावगतसाधनानि बहुविपुलमुपन्यस्तवन्तः । भगवद्गुणवर्णनम्, जगत्सृष्टिप्रकारः, चेतनसंरक्षणं, भगवतो निरङ्कुशस्वातन्त्र्यं, भगवत्याः हृदयोल्लासः, स्वावतारप्रयोजनम्, अर्चावतारसौलभ्यवैभवम्, अधिकारि-स्वरूपं, स्वनैच्यानुसन्धानम्, क्षमाप्रार्थना, शरणागतिः, भगवत्कैङ्कर्य-प्रार्थनं, श्रीमच्छब्दसहितनारायणशब्दविचारधारायां नमःशब्दविवरणे प्रतिपादयामासुः ।

सन्दर्भेऽस्मिन् प्राचीने भारतदेशे विराजमानानि नास्तिकमतानि, वैदिकमतानि च समग्ररूपेणोक्त्वा तेषां खण्डनमकुर्वन्। श्रीमते नारायणाय इत्यनेन भगवतः चेतनसंरक्षणम् अखिलभुवनजन्मस्थेम-भङ्गादिलीलावैभवः अवताररहस्यम्, आपादचूडवर्णनं कुर्वन्तः स्वतःप्रामाण्यमुखेन सोपबृंहणस्य वेदस्य भागद्वयेनाराध्यस्वरूप-प्रतिपादकत्वमुक्तम् । तत्र आराधनांशे तत्तद्वादिभेदप्रतिपादितान् विवादान् विधूय, कर्मविधीनां भगवदाज्ञात्वम् इष्टापूर्तात्मना द्विविधस्य कर्मणः तदाराधनत्वम्, आरध्यस्य तस्यैव फलप्रदत्वमिति च प्रमाणशरणानां पन्थाः इति सिद्धान्तयन्ति स्म । श्रीमतो भगवत एव चिदचिदात्मकस्य जगतः कारणत्वम्, ईश्वरत्वं च समर्थितवन्तः । लक्ष्मीनेत्रात्वया जगदेकातपत्रमित्यनेन द्वयोत्तरखण्ड-श्रीमच्छब्दार्थो-

ऽप्यनुसंहितः, नारायणशव्दार्थं विवृण्वन्तः कारणत्वानुगुणगुणषट्क-परिष्कृततामुपन्यस्तवन्तः । भगवतो बहुभवनत्वं सूक्ष्मचिदचिद्विशिष्टस्यैव भगवतः स्ववल्लभाया लक्ष्म्याः हृदयोल्लासायेति वदन्ति स्म । पराशरभट्टार्याः उत्तरशतके श्रीरङ्गनाथस्य सर्वस्मात्परत्वं, समस्त-जगत्कारणत्वं, तदुपयुक्तज्ञानशक्त्यादिकल्याणगुणगणपरिपूर्णत्वं धर्मव्यवस्थापनार्थमिति ज्ञापयन्ति । इत्थं सर्वत्रापि प्राकारेऽस्मिन् परमशेषिविषयकैङ्कर्यस्यैवात्यन्तोद्देश्यतया, श्रीरङ्गनाथस्य परव्यूह-विभवाभिष्ठूयाशरण्यशरण्यतया कृत्स्नजनसमर्थनीयम् अर्चावतारं प्रस्तुत्य कैङ्कर्यप्रार्थनया समापयन्ति । अनुष्ठितसाधनरक्षणापेक्षया अननुष्ठित-साधनरक्षणमेव श्रीरङ्गनाथदयादिगुणानामत्यौन्नत्यावहमिति एवमपूर्व-शतकद्वयेन परमदयालुभिः श्रीपराशरभट्टार्यैः मन्त्ररत्नखण्डद्वयमेव विवृतमिति साम्प्रदायिकानां पन्थानमनुरुध्य श्रीवेङ्कटाचलरसिकस्य श्रीनिवासपरब्रह्मणः निर्हेतुककृपया षष्ठप्राकारनिर्माणाय समुत्सुको भवामि । श्रीरङ्गनाथः स्वषष्ठप्राकारनिर्माणावसरे श्रेयांसि मे दद्यादिति आत्मगुणलेशविवर्जिते मयि भगवद्भागवताचार्यकटाक्षोऽभिवर्षतु इति विज्ञापयामि ॥

**उत्तरशतकारम्भे हेतुः -**

श्रीमद्भिः पराशरभट्टार्यैः द्वयमन्त्रसारांशज्ञापनाय शतक-द्वयोपेतः श्रीरङ्गराजस्तवः ग्रथित इति सर्वजनविदित एव । द्वयमन्त्रपूर्वखण्डविवरणाय (१२७) सप्तविंशत्युत्तरशतसंख्याकाः श्लोकाः पूर्वशतके विरचिताः, द्वयमन्त्रोत्तरखण्डविवरणायोत्तरशतकमारम्भमाणाः (१०५) पञ्चोत्तरशतसंख्याकान् श्लोकान् रचयामासुः पूर्वाचार्याः सर्वेऽपि संस्कृतवेदप्रमाणत्वेनोपनिषत्सूक्तयः दिव्यसूरिणां सूक्तयश्च प्रदर्शयन्तः द्वयमन्त्रविवरणैकनिष्ठाः चेतनोज्जीवनमकुर्वन्निति शिष्टानामभिप्रायः तत्त्वत्रये तु - "किञ्चैकत्राविशदा अर्थविशेषाः अन्यत्र विषदतया प्रतिपाद्यन्ते । तत्र कारणं सूक्तिविशेषाः संकोचविस्तरौ च । इदं चैककर्तृकप्रबन्धेष्वपि तुल्यम्" - इति प्रकटितवन्तः ।

श्रीमन्तः कृपामात्राप्रसन्नाचार्याः श्रीभाष्यकाराः रामानुजमुनयः स्वश्रीभाष्यारम्भवेलायां श्रीवेङ्कटाचलाधीशं श्रीमन्नारायणं

'अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा ।।' (श्रीभाष्यम्)

इति मङ्गलश्लोके परब्रह्म श्रीमन्नारायणः श्रीश्रीनिवासः अनन्तकोटि-ब्रह्माण्डनायको भूत्वा चराचरं स्वयमेव लीलाविनोदाय सृजति, पालयति, नाशं करोतीति शरणागतानां जीवानां रक्षैकदीक्षां वहतीति वेदवेदान्तेषु "अहमेव वेद्यः" इति गीताशास्त्रमनुसृत्य उद्गीयते इति स एव मह्यं भक्तिरूपापन्नज्ञानं अनुगृह्णात्विति वेदान्तसारमनुगृहीतवन्तः । एवमेव स्वकीये श्रीभाष्ये "अथातो ब्रह्मजिज्ञासा" (१-१-१) इत्यस्मिन् सूत्रे शारीरकमीमांसाभाष्यवेलायां वेदाध्ययनानुपदं प्रवृत्ते कर्मविचारे "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगछ्चेत् ( मु. १-२-१२) इत्युपनिषदुक्ति-मनुसृत्य "प्लवा ह्येते अदृढा यज्ञरूपाः' (मु. २-८) 'यज्ञरूपाणि निखिलानि कर्माणि शिथिलपोतरूपाणि" इति ज्ञान-लाभात् "ब्रह्मविदाप्नोति परम्" (तै. आर. २) ब्रह्मोपासकः परमं पदं गच्छति इति फलितत्वात् स्थिरस्य शाश्वतस्य ब्रह्मणो विचारः कर्तव्य इति ज्ञानं स्पष्टं संभवतीत्यभिप्रयन्ति । अत्र ब्रह्म इत्यनेन सृष्टिस्थितिलयकर्तेति हेयगुणरहित इति, अनन्तकल्याणगुणगणविशिष्ट इति पुरुषोत्तमः श्रीमन्नारायण एवेति प्रतिपादितवन्तः । अतः परब्रह्मणः श्रीमन्नारायणस्य चिदचिदात्मकस्य तत्त्वज्ञानाय नैके ग्रन्थाः श्रीमद्रामनुजीये सम्प्रदाये प्रकाशिताः भवन्ति। तादृशेषु ग्रन्थेषु केचन साक्षात् प्रतिपादनरूपाः । अन्ये भगवत्स्त्रोत्रमुखेनैव सिद्धान्तप्रतिपादनरूपाः विराजन्ते भगवत्स्तोत्ररूपेणैव सिद्धान्तप्रतिपादनपरेषु ग्रन्थेषु श्रीरङ्गराजस्तवः श्रीपराशरार्यानुगृहीतः नितरां शोभते । तत्र द्वयमन्त्रमेव निखिलवेदसार इति द्वयार्थस्मरणमेवोज्जीवनोपाय इति कृत्वा पूर्वशतके पूर्वखण्ड-

विवरणमनुग्राह्य सप्रति उत्तरशतके द्वयमन्त्रवैभवम् उत्तरखण्ड-विवरणात्मकं विशदीकुर्वन्ति स्म ।

"द्वयेन प्राप्नुयात्पुत्र तद्विष्णोः परमं पदम् ।
सर्वमन्त्रफलान्यस्य विज्ञानेन भवन्ति वै ।।
अचिरान्मत्प्रसादेन मल्लोकं च स गच्छति ।
मल्लोकमचिराल्लब्ध्वा मत्सायुज्यं च गच्छति ।।
सर्वपापक्षयकरं सर्वपुण्यविवर्धनम् ।
श्रीकरं लोकवश्यं च सद्यस्संसारतारणम् ।।
मानसं वाचिकं पापं कायिकं च त्रिधा कृतम् ।
द्वयस्मरणमात्रेण नाशं याति सुनिश्चितम् ।।

इति (पाद्मसंहिता)श्रीमच्छङ्करभगवत्पादा अपि

'नारायण करुणामय शरणं करवाणि तावकौ चरणौ ।
इति षट्पदी मदीये हृदयसरोजे सदावसतु ।।'

इति द्वयमन्त्रम् सूचितवन्तः । पूर्वाचार्याणां प्रमाणानि मनसि निधाय श्रीमन्तः पराशरभट्टार्याः उत्तर शतके द्वंयोत्तरखण्डं विशदीकुर्वन्ति । यतो हि -

'ओमित्येकाक्षरं मन्त्रमेकं, गूढार्थमुच्यते ।
प्रकाशार्थं तयोरेकं मक्षरैः पञ्चविंशकैः ।। (भगवच्छास्त्रम्)
तस्मात् मन्त्रद्वयं ब्रह्मन् षड्विंशत्यक्षरं विदुः ।
तस्य विष्णोः प्रसादेन मया लब्धं द्वयं विभो ।।
मन्त्रद्वयस्य माहात्म्यं कल्पकोटिशतैरपि ।
नाहं वक्ष्यामि देवेश किं पुनस्त्वमरैरपि ।।
ओमित्येकाक्षरं मन्त्रं गूढार्थं प्रणवं तथा।
प्रणवस्य प्रकाशार्थं मन्त्ररत्नमुदाहृतम् ।।
प्रणवं प्रणवादूर्ध्वं मन्त्रद्वयमुदाहृतम् । (पाद्मसंहिता)

अतः प्रणवस्यैकमन्त्रत्वं मन्त्ररत्नस्यैकमन्त्रत्वमिति द्वयम्। अथातः श्रीमद्द्वयोत्पत्तिवाक्यं द्वितीयम् । पञ्चविंशत्यक्षराणि। इति मन्त्ररत्नं वाक्यद्वयत्वात् द्वयमिति प्रवदन्ति। अर्थैकत्वादेकं वाक्यम् इति न्यायेन

द्वयस्य साकल्येन सत्यपि एकवाक्यार्थत्वम् अवान्तरवाक्यार्थभेदेन वाक्यद्वित्वं भवत्येव पूर्ववाक्येनोपायपरिग्रहं प्रतिपादितम् । उत्तरवाक्येन उपायफलरूपकैङ्कर्यप्रार्थनम् प्रतिपादितम् भवति । 'मुमुक्षुर्वै शरण महं प्रपद्ये' इति मुमुक्षुरेवाधिकारीति, उपायवरणमात्रेणोपेयलाभः इति अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति इति, 'तरति शोकमात्मवित्' (छा. ७-२-३) इति 'तत्सुकृतदुष्कृते विधूनते' (कौषी. १) इति, 'संसारसागरं घोरमनन्तक्लेशभाजनम् । तमेव शरणं प्राप्य निस्तरन्ति मनीषिणः ।।' इति 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" (कठ. ३-९) इति, "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" (छा. ८-१२-२) इति, "निरञ्जनः परमं साम्यमुपैति" (मु. ३-१-३) इति, "एतमानन्दमयमात्मानमुपसङ्क्रामति" (तै. भृ. १०) इति, 'सोऽश्नुते सर्वान् कामान् लब्ध्वानन्दी भवति" (तै. आ. १) इति, "येन येन धाता गच्छति तेन तेन पथा गच्छति" इत्यादिप्रमाणैश्च शोकनिवृत्तिपुण्यपाप-रूपकर्मविमोचनं, संसारनिस्तरणम्, देशप्राप्तिस्वस्वरूपप्रकाशः, परम-साम्यापत्तिः, सामीप्यं, गुणानुभवः, तज्जनितानन्दः, .भगवदनुवृत्ति-रूपानेकपुरुषार्थानां प्रतिपादकत्वात् एते भगवच्छेषभूतस्यास्य स्वयं पुरुषार्थ इति, तच्च शेषत्वोपपत्तिहेतुरूपकैङ्कर्य एव स्वयं पुरुषार्थ इति निर्णीतः।

'शोकनिवृत्तिकैङ्कर्याधिकारियनुडैय स्वशेषत्वप्रतिसम्बन्धि-भूतभगवत्स्वरूपज्ञानवैशद्यत्ताले पिऱन्द तेळिवैकाट्टकैयालुम् पुण्यपाप-विमोचनं कैङ्कर्यरुचिप्रतिबन्धकनिवृत्तिकैयालुं संसारनिस्तरणं कैङ्कर्य-निरोधिदेशनिवृत्तियाकैयालुं देशप्राप्तिकैङ्कर्यप्राप्तिवर्धकसमाकैयालुं स्वस्वप्रकाशं कैङ्कर्यत्तिनुडय स्वरूपानुरूपत्वत्तै काट्टुकैयालुं साम्यापत्तिकैङ्कर्यहेतुवान अनुभवत्तुक्कु उरुप्पाकैयालुं सामीप्यं भगवद्विग्रहसेवैक्कुउरुप्पाकैयालुं गुणानुभवं कैङ्कर्यहेतुवान प्रीतिक्कु उरुप्पाकैयालुम् आनन्दित्वं प्रीतिकारितकैङ्कर्यमाकैयालुं भगवदनुवृत्ति-

सर्वदेशसिद्धिकैङ्कर्यप्राप्तिक्काकैयालुम् इवै अङ्गतया उपादेयङ्गळ् प्रधानफलं कैङ्कर्यं एन्नौक्काक उत्तरवाक्यं विशेषिक्किरदु ।'[1]

अतः पराशरार्याः श्रीरङ्गराजस्यैव सर्वस्मात् परत्वं विस्तरेण प्रतिपादयिष्यन्तः सन्तः प्रथमतः शास्त्रैकसमधिगम्यत्वात् परतत्त्वस्य तादृशशास्त्रप्रदानमपि अपारकृपावतो भगवतः कृत्यमिति उत्तरशतकारम्भे प्रतिपादयन्ति । तत्रादौ -

'हर्तुं तमस्सदसती च विवेक्तुमीशो
मानं प्रदीपमिव कारुणिको ददार्ति।
तेनावलोक्य कृतिनः परिभुज्यते तं
तत्रैव केऽपि चपला शलभीभवन्ति ।।' (श्रीर. स्त. २-१)

करुणावरुणालयो भगवान् -

"एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः ।
जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ।।"

इत्युक्तप्रकारेण अनादिदुष्कर्मपरम्परानिर्नीतापारसंसारसागरान्तर्निमग्न-दुख्यत् कृत्स्नजनसमुज्जिजीविषारूपसङ्कल्पकल्पतरुवृद्धिमूलकारण-मूलसेचनार्हं सुधाधारारूपपरमकृपाविशिष्टः सर्वेश्वरः दुष्कर्मणोऽपि निदानभूतामविद्यां निरसितुं पुण्यपापे उपादेयतया हेयतया च विविच्य ज्ञातुं श्रुत्यादिकं प्रमाणं प्रदीपमिव ददाति । यथा -

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।"

(श्वेता. ६-१७) इति श्रुत्यनुगुणं पण्डिताः ज्ञानिनः प्रमाणप्रदीपेन सदसती विविच्य ज्ञात्वा तं कारुणिकं भगवन्तमनुभवन्ति । केऽपि चपलास्तु तत्रैव प्रमाणप्रदीप एव शलभीभवन्ति । नाम प्रचुर-विपरीतार्थकल्पनया प्रमाणप्रदीपनिर्वापणोद्युक्ताः स्वयंविनश्यन्तीत्यर्थः। पराशरभट्टार्याः यथार्थशास्त्रज्ञानावगमनाय भगवदनुग्रहः आवश्यक इति प्रतिपादयन्ति स्म । कुत इति चेत् -

---

[1] श्रीमदनन्तगुरुतिलकश्रीनिवासाचार्यविरचिते अष्टश्लोकीव्याख्याने पञ्चमश्लोकव्याख्या ।

"जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ।।"

(लघ्वत्रिस्मृतिः) इत्युक्तप्रकारेण अनेकजन्मकृतसुकृतहेतुकभक्तिरूप-सुकृतिन एव तच्छास्त्रमधिगच्छन्ति । 'भक्त्या शास्त्राद्वेद्मि जनार्दनम्' इति भक्तेः शास्त्रयाथार्थ्यज्ञानसहकारित्वोक्तिरिति स्थापयामासुः ।

वेदबाह्यमतविसर्जनम् -

अथ चपलानामपि उपबृंहणानुगुण्यं किल दृश्यत इत्याशङ्कायां पराशराः हे रङ्गनिधे ! अर्हदादेः वेदबाह्याः याः स्मृतयः वेदेषु याः काः कुदृष्टयः आगस्कृतांस्तान् तत् त्वदध्वनि अन्धंकरिण्य इति तत्रभवान् मनुः स्मृतवानिति,

"या वेदबाह्याः स्मृतयो याश्च कांश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ते स्मृताः ।।"

(मनुस्मृतिः १२-९५) एवमेव अद्वैतिनः वेदाः मिथ्यार्थावेदका इति कर्मप्रतिबन्धकत्वात् प्रयोजनरहिता भवन्तीति ब्रह्मणो गुणराहित्यमेवेति प्रतिपादयन्तः यत्र गुणप्रतिपादकत्वं तत्र अयथार्थत्वमिति स्थापयन्ति । ब्रह्मणः वेदवेद्यत्वं न सिद्ध्येदिति कमप्यप्रामाण्यं प्रदर्शयन्ति । अतः एते कुदृष्टयो भवन्ति । मनुस्मृतेः प्रामाण्यमिति कृत्वा "यद्वै किं च मनुरवदत् तद्भेषजम्" इति श्रुतिं

"वेदेषु पौरुषं सूक्तं धर्मशास्त्रेषु मानवम् ।
भारते भगवद्गीता पुराणेषु च वैष्णवम् ।।"

इति स्मारयन्ति ।

मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ।

इति श्रुतिस्मृति सिल्पामिति स्मारयन्ति । एवं बाह्यस्मृतीनां कुदृष्टि-स्मृतीनां च परमवैदिकमार्गमोहावहत्वमुक्त्वा प्रथमतः प्रत्यक्षादिकृत्स्न-प्रमाणसरणिनिराकरणनिपुणसुगतमुखविमतमतमत्यन्तमसङ्गममित्यष्टा-भिः श्लोकैः प्रतिपादयिष्यन्तः निरवद्यप्रत्यक्षानुमानविरोधात् वक्तृदोषाच्च त्रैविद्यवृद्धपरित्याज्यमाहुः। दुस्तर्कप्रभवतया च वक्तृदोषस्पृष्ट्या च प्रजहति रङ्गविन्द वृद्धाः इति श्लोके त्रैविद्याः प्रत्यक्षमपि वस्तु

स्थिरमिति न ज्ञापयन्ति । श्रुतिरपि न प्रमाणभूतेति बाह्यानां मतम् । निर्दोषश्रुतिविमतेश्च दुस्तर्कप्रभवतया च वक्तृदोषस्पृष्ट्या च वृद्धाः प्रजहति इति वेदबाह्यमतनिरसनं कृतवन्तः । प्रत्यक्षादिप्रमाणासंगतिः निर्दोषमूलप्रमाणभूतवेदप्रामाण्यानभ्युपगमः तन्निबन्धृदोषश्च बाह्यवर्त्महेतो वा हेतुरिति भावः ज्ञापितः ।

चार्वाकमतखण्डनम् -

एवं सामान्यतो वेदबाह्यवर्त्मनो वेदान्तविद्भिर्हेयतां प्रतिज्ञाय प्रत्यक्षमात्राभ्युपगमे बाह्यपदार्थसद्भावमात्राभ्युपगन्तृमन्दप्रज्ञचार्वाकवराकमतेऽपि देहातिरिक्तजीवात्मनस्तत्प्रतिपादकवेदस्य च प्रत्यक्षतामापादयन्ति श्लोकद्वयेन ।

'अवयवितयेदं कुर्वाणैर्बहिष्करणैर्वपुः
निरवधिकोऽहंकारार्हः पुमान् करणातिगः ।' (४)

इति श्लोके देवः अवयवित्वेन हेतुना इदमिति पुरोवर्तितया साक्षात्कुर्वद्भिः तत्तत्प्रमातृचक्षुरादिबाह्येन्द्रियैः प्रकाशते। निरवयवकः करणातिगः जीवात्मा अहमित्यन्तःकरणप्रत्यक्षयोग्यः स्पुरति हि । इत्थं विविच्य निश्चेतुमविपश्चितो जनाः देहात्मनोराधाराधेयभावेन प्रत्यासन्नत्वाद्धेतोः इमौ वपुः पुमांसौ न विविंचते नाम आत्मा देहस्याधारभूतः देहस्तदाधेय इति परस्परव्यधिकरणगुणविशिष्टावपि न विभजन्ति। पृथक्कृत्य न जानन्तीत्यर्थः । तस्मात् जीवात्मनो मानसप्रत्यक्षगोचरत्वात् कारणात् भवदीयाज्ञा रूपं वेदादिकं शासनाच्छास्त्रमिति हिशब्दव्युत्पत्तित्वात् श्रुतिस्मृतिर्ममैवाज्ञेत्युक्तं च परलोकवति देहादुत्क्रम्यलोकान्तरभाजि जीवात्मानि अधिकारं प्राप्नोतु। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'ब्रह्मविदाप्नोति परम्' इत्यादिकं शास्त्रं देहाद्व्यतिरिक्ततयान्तःकरणप्रत्यक्षितं तत उत्क्रम्य कर्मानुगुणं स्वर्गादिभाजं जीवमधिकृत्याबाधितविषयं प्रमाणं प्रवर्ततामिति। इत्थमात्मनः प्रत्यक्षत्वं ततो वेदादेरबाधितविषयत्वं च प्रतिपाद्य वेदस्यापि श्रोत्रप्रत्यक्षसिद्धतया बौद्धैकदेशिना चार्वाकेणापि असाध्यत्वं सिद्धान्तयन्ति ।

'प्रत्यक्षाश्रुतिरर्थधीश्च न तथादोषस्तदर्थः पुनः ।'
धर्माधर्मपरावरेश्वरमुखः प्रत्यक्षबाध्यो न च ।।' (५)

इत्यस्मिन् श्लोके श्रुतिरर्थधीश्च प्रत्यक्षा। दोषः तथा न धर्माधर्मपरावरेश्वरमुखः तदर्थः रङ्गरमण, न प्रत्यक्षबाध्यः चार्वाकमतेपि प्रत्यक्षवत् सा प्रमा अथवा योगेन्मीलितधीः स तदर्थं प्रत्यक्षमीक्षेत इति प्रतिपादयन्ति स्म ।

प्रायशः चार्वाकमते पृथिव्यबनिलानलसमूहेन शरीरोत्पत्तिः इति एते चत्वारः प्रत्यक्षरूपेण द्रक्ष्याम इति; आकाशस्तु न पृथक्पदार्थ इति, अहंपदार्थः आत्मेति, भोगः स्वर्ग इति रोगो नरक इति वदन्ति। एनमेव-

"तुल्यत्वे वपुषां मुखाद्यवयवैः वर्णक्रमः कीदृशः
स्त्री चेयं वसु चापरस्य तदमुं भेदं न विद्मो वयम् ।
हिंसायामथ वा यथेष्टगमने स्त्रीणां परस्वगृहे
कार्याकार्यविचारणा हि यदमी निष्पौरुषाः कुर्वते ।।

इति सिद्धान्तयन्ति । तथैव -

"निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते ।
स्वपिता यजमानेन किन्नु तस्मान्न.हन्यते ।।"

इति वैदिकान् दूषयन्ति च । क्षणिकं शब्दमात्रं न प्रमाणं भवतीति इन्द्रियाप्रत्यक्षजन्यं वेदार्थं न विश्वसिम इति, "यावज्जीवेत् सुखं जीवेत्", "नास्ति मृत्योरगोचरः", "ऋणं कृत्वा घृतं पिबेत्" इति सुराचार्योपदेशमाद्रियन्ते । श्रीमन्तः पराशरभट्टार्याः आप्तवाक्यमेव प्रमाणमिति तस्यार्थः दृग्गोचर एवेति, जीवेश्वरसिद्धौ शास्त्रमपि प्रमाणं भवतीति, चार्वाकमतेऽपि जीवेश्वरयोः योगप्रत्यक्षमेव प्रमाणं किलेति श्रुत्यर्थानां धर्मादीनां सर्वेषामपि यदि प्रत्यक्षत्वमपेक्षितं तदानीमपि न कापि हानिरित्यूचुः ।

सुगतमतखण्डनम् -

चार्वाकमतनिरसनेन वेदप्रामाण्यं प्रतिपाद्य, सुगतमतं निरसिष्यन्तः तदुदितमनूद्य दूषयित्वा श्रुतिप्रामाण्यं श्लोकद्वयेन प्रतिपादयन्ति पराशरभट्टपादाः । बौद्धदर्शनकर्ता गौतमबुद्ध एव । अयं

महावीरसमकालिक एव। अस्य मते प्रत्यक्षानुमाने एव प्रमाणे भजतः। पञ्चसम्बन्धाः द्वादशायतनानि, अष्टादशधातवः एतेषां तत्त्वरूपा भवन्ति।

सर्वमपि क्षणिकं दुःखं, स्वलक्षणं शुद्धमिति भावना मुक्तिर्भवतीति मतेऽस्मिन् वदन्ति । आत्मधारायाः स्थगनमेव मोक्ष इति भावयन्ति । आत्मनः विनाश एव मोक्ष इति प्रकटयन्ति । बौद्धेषु माध्यमिक-योगाचार-सौत्रान्तिकवैभाषिकनाम्ना चतुर्वर्गः दृश्यते । योगः आचारश्चानुष्ठीयते । योगो नाम ज्ञातार्थावगमनाय परिप्रश्नः । माध्यमिकास्तु - गुरोरुपदेशार्थानां शून्यत्वाङ्गीकरणेनोत्तमो भवति । यदि न पृच्छति स एवाधमो भवति । उत्तमत्वाधमत्वे नैकस्मिन् भवत इति कृत्वास्य उत्तम इति व्यवहारो न सिद्ध्येत् । अत एव माध्यमिकनाम्ना व्यवहारः । अस्य तु ज्ञानं ज्ञेयं च शून्यात्मकं भवति। एतेषां माध्यमिकानां शून्यत्वमेव तत्त्वम् ।

"न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्टोयविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ।।"

इति सर्वशून्यवादिनो भवन्ति । पराशरभट्टार्याणां काले बौद्धानां प्राबल्यमपि लोकेऽवर्तत । भगवद्रामानुजाचार्याणामपि काले बौद्धमत-खण्डनम् कृतमासीत् । अत एव -

"पाषण्डद्रुमषण्डदावदहनश्चार्वाकशैलाशनि-
बौद्धध्वान्तनिरासवासरपतिर्जैनेभकण्ठीरवः ।
मायावादिभुजङ्गभङ्गगरुडस्त्रैविद्यचूडामणिः
श्रीरङ्गेशजयध्वजो विजयते रामानुजोऽयं मुनिः ।।"

(कूरेशमिश्रादीनां धाटीपञ्चकम् - श्लो. ५) इति यथा रामानुजार्यः कीर्तितः तथैव पराशरभट्टार्या अपि स्वकीये रङ्गराजस्तवे इतरमत-निरसनपूर्वकस्वमतस्थापनायोद्युक्ता भवन्ति ।

"न सदसदुभयं वा नोभयस्माद्बहिर्वा
जगदिति न किलैकां कोटिमाटीकते तत् ।
इति निरुपधि सर्वं सर्विकातो निषेधन्
वरद सुगतपाशश्चोरलावं विलाव्यः ।।" इति (६)

भारतदेशे वैदिकमतनिरसनार्थं समागतानि क्षुद्रमतानि न कदापि सहन्ते। श्रीशङ्करभगवत्पादकालेऽपि नास्तिकमतखण्डनं कृतप्रायमासीत् । रामानुजार्याणामपि काले पुनः समागतानि बौद्धादीनां मतानि खण्डितानि । तन्मार्गगामिनः पराशरभट्टार्याः सर्वाणि क्षुद्रमतानि खण्डयन्ति । हे वरद रङ्गनाथ इदं जगत् सदसदुभयं वा न वेति उभयस्मात् बहिर्वा तदेकां कोटिं नाटीकते इति निरुपधि सर्वं सर्वकातः निषेधन् बौद्धापशदः चोरलावं विलाव्यः इति दण्डयन्ति स्म । अहो पराशरभट्टार्याणां वैदिकमतरक्षाव्रतः ।

'प्रमाशून्ये पक्षे श्रुतिरपि मतेऽस्मिन् विजयताम्' इत्यास्मिन् श्लोके हे वरद प्रतीतिः इष्टा चेत् निखिलनिषेधो न भवति, नो चेत् कः निषेद्धा । अतः निरूपधिः नेष्टा, सदुपधौ निषेधे घटशकलवत् अन्यत्सिद्ध्येत्, प्रमाशून्ये पक्षे भङ्गेऽस्मिन् मते निरुपाधिकसर्वनिषेधप्रतिपादकस्वमतिक्लुप्तयुक्तिमतिमतेऽपि सर्वशून्यतावादसिद्धयै सर्वशून्यध्वप्रमापि शून्येति पक्षे श्रुतिरपि विजयताम् इति निषेधकप्रमाणात्यन्ताभावेन कृत्स्नापि श्रूतिरबाधितेन स्वार्थेन सकलेन साकं सर्वप्रमाणोत्कृष्टा प्रवर्ततामिति वदन्ति ।

**योगाचार-सौत्रान्तिक-वैभाषिकानां मतखण्डनम् -**

अनन्तरं सौगतावान्तरयोगाचारसौत्रान्तिकवैभाषिकाणामसाधारणं साधारणीयं चाङ्गीकारप्रकारमनूद्य प्रतिक्षेपं प्रतिजानीते ।

'योगाचारो जगदपलपत्यत्र सौत्रान्तिक-
स्तद्धीवैचित्र्यादनुमिति पदं पङ्क्तिवैभाषिकस्तु ।
प्रत्यक्षं तत्क्षणिकयति ते रङ्गनाथ त्रयोऽपि
ज्ञानात्मत्वक्षणभिदुरते चक्षते तान्क्षिपामः ।।' (८)

हे रङ्ग योगाचारनामको बौद्धः तत्त्ववस्तुविषयकतया प्रतीयमानज्ञानमात्रव्यतिरेकेण ज्ञेयमन्यज्जगच्छब्दवाच्यं नास्तीति निषेधति । जगतो ज्ञानात्मा कत्वे सौत्रान्तिकनामा तज्जगत् धीवैचित्र्यात् घटपटादिविषयकज्ञानेषु तत्तद्विषयविरचिताकारवैविध्याद्धेतोः अनुमितिविषयं प्रतिपादयति । इदानीं मदीयज्ञानस्यायं विषयः एतदाकारत्वात्

ज्ञानस्य ज्ञानान्तरवदित्यनुमानप्रकारः। वैभाषिकस्तु प्रत्यक्षं तत् जगत् क्षणिकमिति वदति। इत्थं तत्तदसाधारणाभ्युपगममुक्त्वा साधारणमाह । पूर्वोक्ताः त्रयोपि ज्ञानात्मतत्त्वक्षणभिदुरते चक्षते जगतो ज्ञानात्मकत्वं क्षणमात्रविनाशित्वं च वदन्ति। एतान् निरस्याम इति पराशराः प्रतिज्ञां कुर्वन्ति ।

'जगद्भङ्गुरं भुङ्गुराबुद्धिरात्मेति ...
दरिद्रं जगत्स्यादिदं रङ्गचन्द्र'

इत्यनेन श्लोकेन जगत् भङ्गुरं भवति । भङ्गुरा बुद्धिः आत्मेति वादः असत् भवति। क्षणिकज्ञानसन्तानज्ञानव्यतिरेकेण स्थिरस्य वेत्तुः ज्ञातुरभावे ज्ञेयज्ञानयोः क्षणध्वंसतश्च इदं जगत् स्मृतिप्रतिज्ञादरिद्रं स्यात् । स्मृतिर्नाम पूर्वानुभूते वस्तुनि तदनुभवजनितसंस्कारजन्यं सा काञ्ची सा मधुरेत्येवं रूपं मानसज्ञानं भवति।. एवं च सत्यनुभवितुः स्थिरस्यानभ्युपगमे अनुभाव्यानुभवयोः क्षणिकत्वे च तादृशं स्मरणं न स्यात् । निर्विकल्पकस्य विशेषानवगाहित्वात् तज्जन्यसविकल्पकेन किल संस्कारो जन्यः। सविकल्पकं तज्जन्यसंस्कारश्च न स्याताम् इति स्मृत्युत्पत्तिः कुत इति भावः । प्रत्यभिज्ञा तु पूर्वोत्तररूपकालद्वयविशिष्टस्यैकवस्तुन एकेनानुभवः । यो मया पूर्वमनुभूतः स एवायं देवदत्त इत्येवंरूपः । स च ज्ञातृज्ञेयज्ञानानामर्थैक्येन स्यादित्यर्थः । एवं क्षणिकत्वं निराकृत्य विषयानुभवरूपज्ञानस्यैवात्मत्वनिराकरणपूर्वकं स्वसिद्धान्तं स्थिरीकुर्वन्ति।

'अहमिदमभिवेद्मीत्यात्मवित्त्योर्विभेदे
स्फुरति यदि तदैक्यं बाह्यमप्येकवस्तु ।
प्रमितिरपि मृषा स्यान्मेयमिथात्ववादे
यदि तदपि सहेरन् दीर्घमस्मन्मतायुः ।।' (१०)

इति श्लोकेन 'अहमिदमभिवेद्मि' इति आत्मानः ज्ञानस्य च विभेदे स्फुरति तदैक्यं यदि सर्वानुभवविरुद्धमित्यङ्गीक्रियत इति चेत् पुरोवर्तितया इदमिति गृह्यमाणं बाह्यं वस्त्वपि ज्ञानेनैकं भवतु। अनुभवविरुद्धाभ्युपगमस्य तुल्यत्वादिति भावः । मेयमिथ्यावादिना-

मस्माकमैक्यापादनं न दूषणमित्यत आह योगाचारमतानुसारेण मेयस्य बाह्यस्य मिथ्यात्वं यद्युच्येत तदा प्रमितेरपि प्रमित्यन्तरेण वा मेयत्वाविशेषेण सापि मिथ्या स्यादित्यर्थः । सर्वशून्यवादे प्रमिति-मिथ्यात्वमपि इष्टमित्यताह - प्रमितिमिथ्यात्वमपि सहेरन् यदि अस्मन्मतायुदीर्धं भवेत् । नाम स्वपक्षसाधनपरपक्षदूषणप्रमाणानां बाह्यमते मिथ्यात्वादस्मत्पक्ष एव निर्विपक्षः चिरं जीवेदित्यर्थः । श्रीमन्तः पराशराः एवं स्थिरीकुर्वन्ति स्म ।

इत्थं बुद्धसिद्धान्तवैय्यर्थ्यस्थैर्याय मेयमिथ्यात्वोत्थापनेन समर्थितमर्थं प्रच्छन्नबौद्धसिद्धान्तेऽप्यतिदिशन्ति ।

'एतद्रामास्त्रं दलयतु कलिब्रह्ममीमांसकांश्च
ज्ञप्तिर्ब्रह्मैतज्ज्वलदपि निजाविद्यया बम्भ्रमीति ।
तस्य भ्रान्तिं तां श्लथयति जिताद्वैतविद्यास्तु जीवो
यद्यत् दृश्यं तद्वितथमिति ये ज्ञापयाञ्चक्रुरज्ञाः ॥' (११)

इत्यनेन श्लोकेन श्रीमन्तः श्रीमद्रामायणतत्त्वज्ञाः पराशराः अद्वैतसिद्धान्तखण्डनाय रामास्त्रं प्रयुञ्जानः एवं प्रतिपादयामासुः । एतत् ब्रह्म 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति (तै. आ. १) श्रुतिनिर्दिष्टं वस्तु, ज्ञप्तिः नाम निर्विशेषचिन्मात्ररूपम्, एतत् ज्ञप्तिस्वरूपं ब्रह्म स्वयं प्रकाशमानमपि स्वस्मादभिन्नया अनवद्याविद्यया हेतुना ज्ञातृज्ञेयादि-भेदमपरार्थमप्यनुभवति जीवः । ज्ञातृत्वानुभवविषयो जीवस्तु जिताद्वैत-विद्यस्सन् तत्त्वमसीत्यादिवाक्यजन्यज्ञानेनाभ्यस्ताद्वैतज्ञानस्सन् तस्य ब्रह्मणः ज्ञातृज्ञेयभेदानुभवरूपां भ्रान्तिं निराकरोति । अतः यद्वस्तु प्रत्यक्षादिप्रमाणप्रमेयं तत्तदसत्यमिति प्रत्यक्षादिप्रमाणगत्यनभिज्ञाः शङ्करादयः बोधयन्ति स्म । तान् कलिकाललीलाकोलाहलानुकूलं ब्रह्मप्रवृत्तान् एतत्ज्ञातृज्ञेयज्ञानानामैक्योपयुक्तमेयमिथ्यात्वाङ्गीकार-प्रसङ्गे प्रतिपादितं रामास्त्रवत् दुर्वारं दूषणं खण्डयतु इति, वृत्तिचैतन्यं किल मृषावादिना प्रमितिस्थानाभिषिक्तं, तस्य च प्रमेयत्वात् मिथ्यात्वे "तत्त्वमसि" इत्यादिवाक्यजन्याद्वैतज्ञानस्यापि वृत्तिचैतन्यत्वेन मिथ्यात्वात् तदीयाद्वैतसिद्धान्तः खण्डितः । ततोऽस्मत्पक्षो निर्विपक्ष एव भवेदिति

भावः । इत्थं बौद्धमतनिराकरणसरण्यैव मृषावादस्यापि दूषितत्त्वमुक्त्वा सप्तभङ्ग्यङ्गीकारेण कृत्स्नस्याप्यनवस्थां समर्थयतो बौद्धैकदेशिनो जैनस्य भिन्नाभिन्नवादिनो मृषावाद्येकदेशिनोऽपि तुल्ययोगक्षेमतां लक्षयति।

जैनमतनिरसनम् -

जैनमते महावीरः मूलपुरुषः । अस्मिन् मते प्रत्यक्षानुमाने प्रमाणे भवतः। जीवः, अधर्मः, पुद्गलः, आकाश इति तत्त्वानि भवन्ति। कालोऽपि कैश्चिदङ्गीकृतः । जीवाजीवास्रवबन्धसंवरनिर्जरव-मोक्षाख्यानि सप्त तत्त्वानि भवन्तीति परे भावयन्ति । अन्ये पुण्यपापेऽपि संयोज्य नव तत्त्वानि भवन्तीति प्रोचुः । परं तु जीवाजीवाख्ये तत्त्वे प्रायशो दर्शनेऽस्मिन् प्रमाणभूते भवतः । परमाणुपरिणामः पृथिव्यादिरूपं भजते । एते परमाणवः जगतः उपादानभूताः भवन्ति । एतेषां भगवानेव नास्ति । सर्वज्ञः जिन एव देवः । स तु निर्जितदोषत्वात् पूज्यो भवति इति सम्यग्दर्शनसम्यग्ज्ञानसम्यक्चरित्राणि त्रीणि मिलित्वैव मोक्षहेतुतां भजन्त इति वदन्ति। अस्यैव जिनमतस्य अर्हतमत इति नामान्तरं प्रसिद्धम् । श्रीमन्तः पराशरभट्टारकाः जैनेभकण्ठीरवः इति बिरुद-भाजः रामानुजमुनिवरान् मनसि निधाय, जिनमतखण्डनायोद्युक्ताः -

"अङ्गीकृत्य तु सप्तभङ्गिकुसृतिं स्यादस्ति नास्त्यादिकां
विश्वं त्वद्विभवं जगज्जिनमते नैकान्तमाचक्षते ।
भिन्नाभिन्नमिदं तथा जगदुषे वन्ध्या ममाम्बेति व-
न्नूत्नब्रह्मविदे रहः परमिदं रङ्गेन्द्र ते च क्षताम् ।।" (१२)

इति । ये जिनाः स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च, स्यादस्तीति वक्तव्यं स्यान्नास्तीति वक्तव्यं, स्यादस्ति स्यान्नास्तीति च वक्तव्यं, सर्वथा वक्तव्यं च इत्येवंरूपं कुमार्गमङ्गीकृत्य त्वद्विभवं विश्वम् अनैकान्तमाचक्षते । नाम घटोऽस्तीति प्रतीयमानत्वात् अस्तीति स्यात् । घटो नास्ति पटो नास्तीत्यभावप्रतियोगितया प्रतीयमान-त्वान्नास्तीति स्यात् । एवमुभयप्रतीत्या अस्ति नास्तीति च स्यात् । इत्थमुक्तप्रत्ययत्रयानुगुण्यं व्यवहारत्रयं स्यात् । अतः सर्वथा

सर्वप्रकारेण अव्यवस्थता च वक्तव्यं स्यादिति भवतो विभूतिभूतं कृत्स्नमपि जगत् अनियताकारं वाचि कथयन्ति । ते कथकाः परस्पर-विरुद्धविकल्पकल्पकजिनमतप्रकारेण 'मम माता वन्ध्या' इति व्याहतव्यवहर्तेव ब्रह्मणः अभिन्नमप्युपाधिना भिन्नं चेति गदितवते नूत्नब्रह्मज्ञानाय परस्परव्याहतार्थकथनरूपं परमरहस्यम् उपदिशन्तु । पिशाचानां पिशाचभाषयैवोत्तरं देयं इति न्यायेन स्वोक्तिविरोधानभिज्ञाय तादृशेनैवोपदशो युक्त इति, तदुभयमतनिराकृत्युपयुक्तयुक्त्यनुपन्यास-स्तुतिस्फुटतयात्यन्तविरोधस्येति मन्तव्यं भवति। इममेवमार्गं स्वीकृत्य नवीनाः यादवप्रकाशीयाः भेदाभेदं कुर्वन्तीति जैनादीन् खण्डयन्ति स्म। अत एवाधुनाभारते जिनमतस्य प्राचुर्यं न दृश्यते ।

इत्थं श्रीकूरेशतनयाः बौद्धान् तत्सिद्धान्तैकशरणान् बौद्धबन्धुमपि निर्धूय किञ्चिद्वैदिकत्वगान्धिनौ वैशेषिकनैयायिकावपि दूषयन्ति स्म । श्रीमन्तः पराशराः भगवद्विरोधज्ञानप्रदानि शास्त्राणि सर्वधा नाङ्गीकुर्वन्ति, वेदविरुद्धमार्गप्रदर्शकानपि खण्डयन्ति।

**वैशेषिक-नैयायिकयोः मतनिरसनम् -**

कणादमहर्षिणा प्रवर्तितमिदं तत्त्वं प्राचीनेष्वन्मतममेव कणादसूत्राणि गौतमसूत्रेभ्योऽपि प्राचीनानि । एतानि कणादसूत्राणि विक्रमशकादपि वर्षत्रयशतसंवत्सरेभ्यः पूर्वमेव विरचितानि । तदन्तर-काले प्रचारे समागतानि । वैशेषिकदर्शने प्रधानसिद्धान्तः न्यायदर्शन-सिद्धान्तेन समः भवति । अत एवास्य समानतन्त्रमिति नाम समागतम्। अस्मिन् दर्शने अन्तर्जगतः ज्ञानस्य च मीमांसा भवति, वैशेषिकदर्शने तु बाह्यजगतः विस्तरेण समीक्षणं प्रस्तुतं स्यात्। वैशेषिके दर्शने द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाभावा इति सप्त पदार्थाः भवन्ति । पदार्थ-ज्ञानानन्तरमेवात्मनः स्वरूपपरिचयलाभात् मोक्षप्राप्तिः सम्भवति। दर्शनेऽत्र प्रत्यक्षानुमानोपमानशब्दप्रमाणानि च चत्वारि भवन्ति । परमाणुपाद एव वैशेषिकदर्शने विशेषः । तच्चोत्पत्तिरौपनिषदं भवति । जैना जीवकादयोऽपि अङ्गीकृता एव । न्यायदर्शने परमाणुवादः प्रस्तावितः । किन्तु वैशेषिकदर्शने बहुधा प्रपञ्चितः । इदं समस्तं

भौतिकं जगत् परमाणुभिः निर्मीयते इति परमाणुवादसिद्धान्तः । परमाणवः जगतः उपादानकारणतां भजन्ते । अग्नेः पृथिव्याः परमाणुभिः परमात्मनः ध्यानमात्रेण ब्रह्माण्डस्योत्पत्तिर्भवति । तदनन्तरं परमात्मा ब्रह्माणम् इदं जगच्च सृजतीति प्रपञ्चयन्ति । इदं जगत् ब्रह्मा च सृष्टिस्थितिलयानां कारणं भजत इति न्यायवैशेषिकदर्शनयोः तुलनात्मकपरिशीलनात् स्पष्टमवगम्यते । श्रीमन्तः पराशरभट्टारका विदितन्यायवैशेषिकमर्मज्ञाः वैशेषिक-नैयायिकानपि दूषयन्ति स्म । एतावुभावपि "यतो वा इमानि भूतानि जायन्ते" (तै. आ, १) इत्यादि-वेदान्ते समृद्धतया अत्यन्तसुलभं भवदीयकृत्स्नजगदुपादानकारणत्वं स्वकुतर्कैः सर्वप्रमाणेनापि कार्यानुगुणगुणन कारणेन भवितव्यम् । इतरथा उभयोर्वैरूप्यं स्यादिति दुस्तर्कैः किञ्चत्किञ्चिदुपाददानौ सन्तौ परमाणुषु विशेषेण परिणतं कृत्वा तत्तत्परमाणव एव पृथिव्यादित-त्तद्भूतकारणानीति प्रतिपादयन्ति। हे श्रीरङ्गनाथ तव कार्यम् "आत्मन आकाशः संभूतः" इत्यादिश्रुतिभिर्भवतः कार्यतया प्रतिपादितं नभःप्रभृतिकं च भवदनपेक्षं स्वतन्त्रं नित्यमिति च ब्रुवाते । इत्थं श्रुतिविरुद्धार्थकतया तयोः मतमपि परमवैदिकैरनुपादेयमेवेति श्रीभट्टपादानामाशयः ।

**साङ्ख्य-योग-पशुपतिमतानां स्वरूपकथनम् -**

श्रीपराशराः साङ्ख्य-योग-पशुपतिमतानामीषदाम्नायानुसरणं श्रीपाञ्चरात्रस्य सर्वथा श्रुत्यनुविधानं च पञ्चमवेदादेव निश्चीयत इति चतुर्दशश्लोके

"वेदे कर्त्राद्यभावात् बलवति हि नयैस्त्वन्मुखे नीयमाने
तन्मूलत्वेन मानं तदितरदखिलं जायते रङ्गधामन् ।
तस्मात् साङ्ख्यं सयोगं सपशुपतिमतं कुत्रचित् पाञ्चरात्रं
सर्वत्रैव प्रमाणं तदिदमवगतं पञ्चमादेव वेदात् ।।" (१४)

इत्यनेन श्लोकेन साङ्ख्ययोगदर्शनयोरपि परमप्रामाण्यं न सिद्ध्यतीति निरसनं कुर्वन्ति ।

साङ्ख्याचार्यमते मूलप्रकृतिरविकृतिः "महदाद्याः प्रकृति-विकृतयस्सप्त, षोडशस्तु विकारः न प्रकृतिर्नापि विकृतिः पुरुषः" इति अत्र प्रमाणानि प्रत्यक्षानुमानशब्दानि त्रीणि भवन्ति इत्यवगम्यते । शब्दप्रमाण इत्युक्ते वेदप्रमाणं न भवति । कपिलागम एव शब्दो भवति। कैवल्य एव पुरुषार्थ इति, प्रकृतिपुरुषौ विभुस्वरूपावेव । अतः पुरुषः स्वयं प्रकृतेरभिन्न इति न जानाति । अयमभेदभ्रम एव संसारो भवति । अनयोः भेदज्ञानस्थितिरेव मोक्षो भवति । सा च स्थितिः योगादेव संभवतीति वदन्ति । साङ्ख्यानां योगानां च किञ्चिदेव वैविध्यं भवति । ते ईश्वरं निमित्तकारणत्वेनाङ्गीकुर्वन्ति साङ्ख्याः न तथा अङ्गीकुर्वन्ति ।

"रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तात् ।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ।।" इति
"प्रकृतेस्सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टास्मीति न पुनः दर्शनमुपैति पुरुषस्य ।।"

इति सुकुमाररूपां प्रकृतिं यथा तत्त्वेन जानाति पुरुषः तथा सा न कदापि पुरुषं संस्पृशेदिति वदन्ति ।

योगदर्शनस्य तु प्रवर्तकः पतञ्जलिमहर्षिरेव । साङ्ख्याः यत्र स्वसिद्धान्तमुत्सृजन् तत आरभ्यायं महर्षिः प्रारब्धवान् । साङ्ख्यस्तु प्रकृतिपुरुषविवेक एव मोक्षहेतुरिति उक्त्वा विरराम । ततः प्रकृतिपुरुषयोः विवेकः कथं जागर्तीति योगे विचारितः । अतः उभयोर्दर्शनयोरभेद इति वक्तुं शक्यते।

साङ्ख्याः ईश्वरं नाङ्गीकुर्वन्ति । अत एते निरीश्वर-साङ्ख्या इति एते योगाचार्याः ईश्वरमङ्गीकुर्वन्तीति हेतोः सेश्वरसाङ्ख्या इति च प्रथन्ते । एतेषामपि वेदाः न प्रमाणभूताः । परं तु पतञ्जलेरागम एव प्रमाणं भवति । अत्र ईश्वरः त्रिविधकारणं न भवति । केवलनिमित्त एव । अतः वैदिकेश्वरोऽत्र न भवति इति साङ्ख्ययोगदर्शनस्वरूपमवगम्यते । अतः श्रीमन्तः पराशरभट्टार्याः हे रङ्गधामन् कर्त्राद्यभावात् बलवति वेदे नयैः त्वन्मुखे नीयमाने;

तन्मूलत्वेन तदितरदखिलं मानं जायते । तस्मात् सयोगं पशुपतिमतं कुत्रचित् श्रुतितदविरुद्धमन्वाद्यनुगुणभणनस्थले प्रमाणं भवति । पञ्चरात्रं सर्वत्रैव प्रमाणं कुत्रचिदपि श्रुत्यननुगुणतत्त्वगणगुणभणनाभावादिति ज्ञायते । सार्वत्रिकं पाञ्चरात्रप्रामाण्यं पञ्चमाद्वेदादेवावगतमिति नाम भारतः पञ्चमो वेद इत्युक्तवेदसादृश्ययुक्तात् महाभारतादेव ज्ञातं भवति । श्रीमहाभारते मोक्षधर्मे "उपरिचरवसूपाख्येन" श्रीपाञ्चरात्र-शास्त्रोत्पत्तिः, तद्विहितानुष्ठानावश्यानुष्ठेयत्वकथनानन्तरमुच्यते ।

**श्रीपाञ्चरात्रस्य सर्वथा श्रुत्यनुविधानं पञ्चमवेदादेवेति कथनम् -**

"इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आविध्यमतिमन्थानं दध्नो घृतमिवोत्थितम् ।।"
(म.भा.शा.मो. ३४४-१२)
"नवनीतो यथा दध्नो द्विपदां ब्राह्मणो यथा ।
आरण्यकं च वेदेभ्यः ओषधीभ्यो यथामृतम् ।।"
"इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
साङ्ख्ययोगकृतान्तेन पाञ्चरात्रानुशब्दितम् ।।" (१४०-१११)
"इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
ऋग्यजुस्सामयजुभिर्जुष्टमथर्वाङ्गिरसैस्तथा ।।" (३६६-३२).
"भविष्यति प्रमाणं वा एतदेवानुशासनम् ।"

इति विस्तरशः तत्प्रामाण्यं प्रतिपादितमिति प्रदर्शितवन्तः । एवं सामान्यतोऽभिहितं साङ्ख्ययोगपाशुपतमतानां प्रायशो वेदविरुद्धार्थकत्वं भगवच्छास्त्रस्य कात्स्न्येन तदनुगुणत्वं च स्थालीपुलाकन्यायेन उदाहृत्य पञ्चदशे श्लोके प्रदर्शयन्ति ।

"सञ्चष्टेनेश्वरं त्वा पुरुषपरिषदि न्यस्य यद्वान्यपर्यात् ...
त्वं त्वामेवाभ्यधास्त्वं ननु परविभवव्यहनाठ्यंभविष्णुम् ।।"

इत्यस्मिन् श्लोके हे रङ्गराज साङ्ख्यः त्वां पुरुषपरिषदि न्यस्य ईश्वरं न संचष्टे - "पतिं विश्वस्यात्मेश्वरम्" (तै. ना. १०) इति चिदचिदीश्वरत्वेन श्रुत्युक्तमीश्वरं न वदन्ति; आसुरिपञ्चशिखादिमध्ये परम्परया साङ्ख्यमतप्रवर्तकस्य कपिलमुनेः ब्रह्मविदन्तर्भावप्रसिद्ध्या

कथमीश्वरानङ्गीकारः इति; यद्वा अन्यपर्यात् नाम अन्यस्मिन् परस्य भावः अन्यपरत्वम्। तस्मात् प्रकृतिपुरुषविवेकमात्रपरत्वात् शाास्त्रस्य त्वामीश्वरं न सञ्चष्ट इति; योगशास्त्रप्रवर्तकः शेषावतार-तया सूरिपुञ्जाञ्चितः पतञ्जलिश्च केनचित्तात्पर्यविशेषेणौपाधिक-मिवावोचत् । अभ्यस्तयोगस्यातीवातिशयकथनरूपतात्पर्यविशेषणक्लेश-कर्माद्यसंस्पृष्टे पुरुषविशेष एवेश्वरत्वं प्रतिफलतीति त्वामीश्वरं नावोचत् इति - "शैवः पाशुपतमतप्रवर्तकः ब्रह्मकपालासक्तकरतलं यथातथाकृत्त-भिक्षाटनतया कर्मवश्ये पशुपतौ पक्षतातिशयात् सुराजत्वं, पूर्वमनीश्वरस्येदानीमीश्वरत्वं स्वाभिमानविषयं करोति । किन्तु 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' इति श्रीपाञ्चरात्र-शास्त्रप्रवर्तकस्त्वं परत्वविभवावतारव्यूहैः परमपदनिलयवासुदेवत्वेन रामकृष्णाद्यवतारेण सङ्कर्षणानिरुद्धप्रद्युम्नव्यूहेन च आढ्यंभवितारं सम्पन्नंभविष्णुम् उक्तत्रयमन्तर्यामित्वार्चावतारयोरप्युपलक्षणं स्वीकर-णीयम् । स्वरूपरूपगुणविभूत्यादिभिः यादृशस्त्वं तादृशमेव त्वां प्रतिपादितवानसीत्यर्थः प्रसिद्धौ । अतः साङ्ख्यादीनां त्रयाणां प्रायशो वेदविरोध एव, भगवच्छास्त्रस्य कुत्रापि तदभावात् महाभारतोक्त-वैदिककृत्स्नप्रमाणानुगुणत्वं श्रीपाञ्चरात्रस्य सिद्ध्यतीति पराशर-भट्टार्याणां निश्चयः अभिप्रायः सर्वजनानुमोदं एव । इत्थम् आचार्यसार्वभौमाः बौद्धसिद्धान्तस्य वेदबाह्यत्वं, साङ्ख्यादीनां कुदृशां प्रायशो वेदविरोधं च प्रतिपादितं निगमयन्ति स्म।

"इति मोहनवर्ष्मणा त्वयापि ग्रथितं बाह्यमतं तृणाय मन्ये ।
अथ वैदिकवर्मवर्मितानां मनिताहे कुदृशां किमीश वर्त्म ।।"

(१६) हे स्वामिन् बुद्धावतारवता भवतापि असुरनिकरमोहकरमार्गेण हेतुना निबद्धं सर्वात्मना श्रुतिवर्त्मबहिर्भूतमतं तृणमिवानादरविषयं करोमीति बाह्यमतादनन्तरं वैदिकत्वकञ्चुकेन कञ्चुकितानां श्रुतिवर्त्मव्यत्यस्तार्थकल्पककलुषशेमुषीकाणां मार्गे मनिताहे किम् नाम उपेक्षक एव भवितास्मीति प्रत्यपादयन् । आश्चर्यावहः खलु पराशरभट्टार्याणां स्वच्छन्दवादावहत्वविशेषः ।

अत एव श्रीमतां पराशरभट्टार्याणां विषये -

"प्रमाणनखनिर्भिन्नवादिमत्तेभमस्तकः ।
राजते निगमान् गर्जन् श्रीपराशरकेसरी ।।"

इति सर्वैः विपश्चिद्भिः विजयघोषः कृतः ।।

**वेदानां प्रमाणत्वकथनम् -**

श्रीरङ्गास्पद ! प्रळयकालेषु अध्येतृचतुर्मुखाद्यभावात् अध्ययनजन्यसंस्काराकारं स्वस्मिन् विन्यस्यन् संस्कारमात्रपरिशेषितं वेदं निदधान । सृष्टिकालेषु तत्स्मारितं रूपं नाम च. तत्तदर्हनिवहे तत्तद्रूपनामयोग्ये महदादिपृथिव्यन्ताचिन्निचये ब्रह्मादिस्तम्भपर्यन्त-जन्तुबृन्दे व्याकृत्य

"सर्वाणि रूपाणि विचिन्त्यधीरः । नामांनि कृत्वाभिवदन् यदास्ते"

"नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ।।"

इति स्मृत्युक्तप्रकारेण नामरूपे निर्मायेत्यर्थः । "तत्तदितं शासंन् हर्तुं तमस्सदसती च विवेक्तु"मित्युक्तप्रकारेण कृत्याकृत्यविवेचनमखेन देवमनुष्यादिहितमाज्ञापयन् सन्प्रलयसमये करणकलेबरविधुरताहेतुक-ज्ञानहान्या सुप्तप्रायं, सृष्टिसमये पुनः करणकलेबरसंश्लेषेणोत्पन्न-ज्ञानतया उद्बुद्धप्रायां विरिञ्चिपूर्वजनतामध्याप्य, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोतितस्मै' (श्वेता. ६-१८) इत्युक्तप्रकारेण बोधयित्वा अस्मृतकर्तुकान् अपैरुषेयतया स्मृतिप्रतिपादितान् वा वेदान् पुनरपि प्रलयाशङ्कया स्वयं च बिभर्षि इति यत्कारणात् वेदाः प्रमाणं भजन्ते इति पराशराः वदन्तः भगवत्स्वरूपरूपादिंप्रतिपादकवेदस्य शिक्षादिभिष्षड्भिरङ्गैः न्यायमीमांसास्मृतिपुराणैश्चतुर्भिश्चोपकराममन्ति। यथा - 'शिक्षायां वर्णशिक्षापदसमधिगमो व्याक्रियानिर्वचोभ्यां त्वा विचिन्वन्ति वेदाः' इत्यनेन श्लोकेन हे रङ्गनाथ शिक्षाख्ये वेदाङ्गे अचां हलां च वर्णानाम् उच्चारणशिक्षापरस्परसंयोगप्रकारशिक्षा चोक्ता व्याकरणनिरुक्ताभ्यां प्रकृतिप्रत्ययविभागेन सामान्यतो निर्वचनेन च पदपदार्थविवेकः उक्तः । छन्दश्चितौ गायत्र्युष्णिगादिकं छन्दः उक्तम्

ज्योतिषं समयं गमयति, नाम तत्तत्कर्मानुष्ठानानुगुणं कालं ज्ञापयति, कल्पे आश्वलायनापस्तम्बादिविहितकल्पसूत्रे वैदिककर्मानुष्ठानप्रकार उक्तः इति प्रसिद्धौ वैदिकसिद्धान्तानुगुणं प्रापितायोः तर्कपूर्वोत्तर-मीमांसयोः पूराणस्मृतिषु चार्थव्यक्तिः स्यात्। पूर्वोक्तैः शिक्षाद्यैः स्मृतिपर्यन्तैरनुसृताः वेदाः त्वां विचिन्वन्ति विचारयन्ति च -

'इतिहासपुराणाभ्यां वेदं समुपबृम्हयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरेदिति ।'
'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्रे सधर्मं वेद नेतरः ।।'

इति सर्वत्र घोषितत्वात् वेदार्थावगमनाय षडङ्गादयः ज्ञेयाः इति सर्वत्र षडङ्गपुराणादिषु वेदप्रामाण्यमेवाङ्गीक्रियत इति, सर्वाणि च शास्त्राणि वेदाः भगवन्तं त्वां श्रीरङ्गनाथं नारायणमेवामनन्तीति स्थापयन्ति स्म ।

एवं सपरिकरस्य वेदस्य भगवत्परत्वं सामान्यतः प्रतिपाद्य-कर्मभागस्यापि पूर्वमीमांसान्यायसहकारेण भगवदाराधनप्रतिपादकत्वं, ब्रह्मभागस्य इतिहासपुराणोत्तरमीमांसान्यायसहकारेण भगवत्स्वरूप-रूपादिप्रतिपादकत्वं ततो भागद्वयात्मकस्य कृत्स्नस्यापि वेदस्य भगवत्परत्वे भगवद्गीतावचनं चोदाहरन्ति भट्टपादाः ।

**वेदस्य भगवत्परत्वे भगवद्गीताया वचनोदाहरणम् -**

'आदौ वेदाः प्रमाणं स्मृतिरुपकुरुते सेतिहासैः पुराणैः
न्यायैस्सार्थं त्वदर्चाविधिमुपरि परिक्षीयते पूर्वभागः ।
ऊर्ध्वो भागः त्वदीहागुणविभवपरिज्ञापनैस्त्वत्पदाप्तौ
वेद्यो वेदैश्च सर्वैरहमिति भगवन् स्वेन च व्याचकर्थ।।' (१९)

प्रथमतः मूलनिरपेक्षं वेदाः प्रमाणं स्वतन्त्रतां भजन्त इति, स्मृतिः सेतिहासैः पुराणैः पूर्वोत्तरमीमांसान्यायैश्च उपबृंहणरूपमुपकारं करोति पूर्वभागः । स्मृतिपूर्वमीमांसोपकृतः कर्मभागः त्वदर्चाविधिमुपरि पर्यवस्याति । कृत्स्नकर्मणापि तत्तद्देवतान्तर्यामिणो भवत एवाराध्यत्वात् त्वदाराधनविधानप्रतिपादनपर्यवसन्नो भवति इति इतिहासपुराणोत्तर-मीमांसासहकृतो ब्रह्मभागः त्वदिहागुणविभवपरिज्ञापनैः त्वत्पदाप्तौ

पर्यवस्यति। तत्त्वहितपुरुषार्थानां त्रयाणां मध्ये तत्त्वहितप्रतिपादनस्यापि पुरुषार्थत्वात् पुरुषार्थपर्यवसन्नो भवति। हे भगवन् रङ्गधाम अहं सर्वैश्च वेदैः वेद्य इति 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृतवेदविदेव चाहम्' (भ.गी. १५-१५) इति पुरुषोत्तमप्राप्तियोगे भगवद्गीतावचनं त्वमेव व्याकृतवानसि । एवं वेदपुराणादिषु वेद्यः भगवानेव इति ज्ञातवन्तः अपि वेदबाह्यकुदृष्टयः स्वेच्छं जल्पन्ति । सर्वात्रापि गीताशास्त्रे भवद्विभूतिः विस्तरेणोक्ता। अतः भवानेव तत्त्वं भवानेव गतिः भवानेव सर्वमिति सिद्धान्तः साधुतमः इति स्वतः प्रामाण्यमुखेन सोपबृंहणस्य वेदस्य भागद्वयेन आरधनाराध्य स्वरूपप्रतिपादकत्वमुक्तं, तत्राराधनांशे तत्तद्वादिभेद प्रतिपादितान् विविधान् विधूय कर्मविधीनां भगवदाज्ञात्वं इष्टापूर्तात्मना द्विविधस्य कर्मणस्तदाराधनत्वम्, आराध्यस्य तस्यैव फलप्रदत्वमिति च प्रमाणशरणानां पन्था इति सिद्धान्तयन्ति स्म।

**कर्मणां विषये श्रीरङ्गेशपुरोहितानां दृढाभिप्रायः -**

विंशातितमे श्लोके श्रीमन्तः श्रीरङ्गेशपुरोहिताः ज्ञानादीनां कर्मणां सर्वेषामपि श्रीमन्नारायण एव भोक्तेति स एव फलं ददातीति सुराः पितृदेवताः अपूर्वकर्माणि च न कदापि फलं प्रदास्यन्तीति प्रतिपादयन्ति ।

'क्रिया तच्छक्तिर्वा किमपि तदपूर्वं पितृसुर-
प्रसादो वा कर्तुः फलद इति रङ्गेश कुदृशः ।
त्वदर्चेष्टापूर्ते फलमति भवत्प्रीतिजमिति
त्रयीवृद्धास्तत्तद्विधिरपि भवत्प्रेरणमिति ।।' (२०)

ऋत्विग्व्यापाररूपक्रियायाः तदानीमेव विनष्टत्वात् तदुत्पादितः शक्तिशब्दवाच्यः कश्चिदतिशयो वा फलद इति भट्टतन्त्रसम्प्रदायः । एते भगवानेव फलद इति न विश्वसन्ति । प्राभाकरादयः किमप्यनिर्वचनीयशक्तिकं क्रियाजन्यम् अपूर्वशब्दवाच्यमेव फलदं भवतीति वदन्ति। भगवतः शक्तेरपि अपूर्वशक्तिं विश्वसन्तीति धिक्।

नवीनास्तु कर्मणां पितृसुराराधनरूपत्वात् तदाराधितपितृसुर-प्रसाद एव फलद इति भावयन्ति । विचित्रमिदं मतम् । श्रीमन्तः निगमान्तमहादेशिकाः अस्मिन्विषये दयाशतकनाम्नि स्तोत्रे -

'क्षणविकिलयिनां शास्त्रार्थानां फलायनिवेशिते
सुरपितृगणे निर्वेशात्प्रागपि प्रलयंगते ।
अधिगतवृषक्ष्माभृन्नाथामकालवशंवदां
प्रतिभुवमिह व्याचख्युस्त्वां कृपे निरूपप्लवाम् ।।'

इति यागादिपुण्यकर्मणां साक्षात्फलप्रदत्वमिति वादमखण्डयन् । अतः कर्माणिक्षणविलयानि भवन्ति । कालान्तरभवस्वर्गादिफलानां न हेतुभूतानि भवेयुः । एतदर्थमपूर्वपदार्थाङ्गीकारे दोषबाहुल्यमास्ति । अतः कर्मसु उद्दिष्टाः इन्द्रादयः फलदा भवन्ति इति ता देवता अपि परमपुरुषानुग्रहेण तत्तत्पदेषुनियमितकालं यावत् नियमितफलानि प्रसादयन्ति इति तदनन्तरम् 'आब्रह्मभुवनाल्लोका पुनरावर्तिनोऽर्ज्जन' इति गीताशास्त्रप्रमाणानुसारेण नष्टपदा भवेयुः । तस्मिन् समये तत्तत्फलदाता को वा भवेत् इति प्रश्नं विधाय अपूर्वाराधकानखण्डयन् । कुदृशः आराधनाराध्ययथार्थानभिज्ञाः इति पराशराणां निश्चिताभिप्रायः । अत एव त्रयीवृद्धाः ऋग्यजुस्सामनामकश्रुतित्रये चिरपरिचयवन्तः जपहोमादानादिकं देवताराधनमिष्टम् कूपतटाकारामगोपुरादिनिर्माणरूपं पूर्तम् एवमेव त्वदर्चा इष्टापूतफलमपि भवतः प्रसादजन्यमिति वेदशास्त्रविधिरपि भवत्प्रेरणमिति उपदिशान्ति स्म। अत्र गीताशास्त्रवाक्यानि प्रमाणानि भवन्ति।

'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचालां श्रद्धां तामेव विदधाम्यहम् ।।
स तया श्रद्धया युक्तः तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ।।'
(भ.गी. ७-२१,२२)

इति । एवमेव

'ये भजन्ति पितृन् देवान् ब्राह्मणान् सहुताशनान्।

सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ।।'

इति प्रमाणानि भवन्ति ।

देवेषु देवेन्द्रे चराचरे सर्वत्रान्तर्यामिरूपेण श्रीहरिः विराजते स एवान्तश्शास्ता फलदो भवतीति श्रीरङ्गेशपुरोहितानां वचनम् कर्मकाण्डविषये परमं प्रामाण्यं भजत्येव।

**सर्वकर्मसमाराध्यः नारायण एवेति कथनम् -**

अथ श्रीपराशराः वेदचोदितकर्मकाण्डविषये फलदः नारायण एवेति प्रतिपाद्य, 'आज्ञा ते सनिमित्त' इत्यनेन एकविंशतितमेन श्लोकेन हे श्रीरङ्गसर्वस्व! नित्यनैमित्तिककर्माणि भवदाज्ञाकैङ्कर्याण्येव स्वर्गादिकाम्यद्विधिः अनुज्ञाकैङ्कर्यारूपा भवतीति, अभिचारश्रुतिः शठचित्तानां शास्त्रवशतोपायरूप इति कृत्वा भवानेव सर्वकर्मफलप्रद इति श्रीरङ्गनाथं स्तुवन्ति स्म। समस्तशासितुः ते रक्षाकूतनिवेदिनी श्रुतिः भवत्सार्वकालिकं शासनं भवतीति अधिकारतारतम्यशोधनेन विना सकलपरिपालनाभिलाषमूलकारणभूता भवतः करुणा कृत्स्नविस्मया-वहेति आश्चर्यं प्रकटयन्ति। मानं 'प्रदीपमिव कारुणिको ददाती'ति, उत्तरशतकारम्भे निगदितवन्तः । 'सर्वकर्मसमाराध्य सनातनधर्म' इति देशिकपादानां रघुवीरगद्योक्तवचनानि स्मरणीयानि भवन्ति । द्वाविंशतितमे श्लोके अर्थवाक्यवदुपासनविधिशेषतामन्तरेणं स्वातन्त्र्येण प्रमाणतां प्रतिपादयन्तः भट्टसार्वभौमाः हे रङ्गेश अत्र निधिः आस्ते इतिवत् पुमर्थभूते त्वयि गुणरूपवृत्तवाद्दाः दिव्यात्मस्वरूपकल्याण-गुणदिव्यविग्रहदिव्यचेष्टितप्रतिपादकाः वेदाः सिद्धार्था अपि समन्वयन्ते 'सत्यं ज्ञानमनन्तं ब्रह्म', (तै. आ.१) 'आनन्दो ब्रह्मेति व्यजानात्', (तै. भृ. १) 'यस्सर्वज्ञस्सर्ववित्, (मु.१.१.९) परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', (श्वेता. ६-८) 'सत्यकामः सत्य-सङ्कल्पः', (छा. ८-१-५) 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आ प्रणखात् सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी', (छा. १-६-६) 'प्रजापतिरकामयत प्रजाः सृजेयेति, तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च

त्यच्चाभवत्', (तै. आ. ६) 'अजायमानो बहुधा विजायते' (उत्तरना.) इत्यादिगुणरूपत्वप्रवादानां स्वतः परमपुरुषार्थभूतभगवत्स्वरूपाव-बोधकत्वात् स्वतन्त्रप्रमाणत्वं सम्भवति। एषां गुणरूपवृत्तवादानां उपासनाफलविद्भिः नाम 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः प्रष्टव्यः' (बृ. ६-५-६) 'ब्रह्मविदाप्नोति परम्' (तै. आ.१)इत्याद्युपासनात् तत्फलबोधकवाक्यैः न विशेषः भवति । यथा 'वायुर्वै क्षेपिष्टा देवता' (तै. सं) य अर्थवादं 'वायवीयं श्वेतमालभेत भूतिकाम' इत्यादिविधि-शेषतया यथा प्रमाण्यं, तथा गुणरूपवृत्तवादानां उपासनतत्फल-वादविधिशेषतया न प्रामाण्यमिति स्थापयामासुः ।

**अद्वितीयश्रुतेः विशिष्टाद्वैतार्थ एवेति कथनम् -**

'देहो देहिनि कारणे विकृतयो जातिर्गुणाः कर्म च
द्रव्ये निष्टितरूपबुद्धिवचनास्तात्स्थ्यात्तथेदं जगत् ।
विश्वं त्वय्यभिमन्यसे जगदिषे तेनाद्वितीयस्ततः
मायोपाधिविकारसंकरकथा का नाम रङ्गेश्वार ।।' (२३)

श्रीपराशराः मायावादिनां शाङ्करादीनां मतं निरसितुम् एतेषां निर्विशेषचिन्मात्रं ब्रह्मैकमेव मायापरपर्यायाविद्यया स्वगतनानात्वं पश्यतीती सिद्धान्तम्, एवमेव अन्तःकरणाद्युपाधिभेदेन भिन्नं भवतीति भास्करमतं तादृशं ब्रह्मैव चिदचिदीश्वरात्मना परिणमत इति यादवप्रकाशमतं खण्डयन्ति स्म । हे श्री रङ्गेश्वर देहः देहिनि विकृतयः कारणे मृत्तन्वादौ विकाराः कार्यभूता घटपटादयः निष्टितरूपबुद्धिवचना जातिः गुणाः कर्म च द्रव्ये निष्ठितरूप-बुद्धिवचनानि भवन्ति । तथेदं परिदृश्यमानं विश्वं भवति प्रतिष्ठितं सङ्कल्पयसि । सङ्कल्पाभावे भवन्निष्ठता न संभवतीति विपर्यये पर्यवसाने तात्पर्यं भवति । तेनाद्वितीयः जगदिषे इति गीतावचनं स्मारयन्ति ।

"मयि सर्वमिदं प्रोक्तं सूत्रे मणिगणा इव"
"न तदस्ति विना यत्स्यान्मया भूतं चराचरम्" (भ.गी. ७-७)

श्रुतिभिरपि भवानेव जगदिषे । "यस्यात्मा शरीरं यस्य पृथिवी शरीरम्" (बृ. का. ५-७-२१) इत्यादिना चिदचितो भगवच्छरीरत्वं प्रतिपादितम् । "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं ब्रह्म" (छा. ६-१-५) इत्यादिना विभागानर्हसूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणः कारणत्वमुक्तम् । "एतस्य वाक्षरस्य प्रशासने गार्गि" (बृ. ५-८-९) "द्यावापृथिव्यौ विधृते तिष्ठतः" इत्यादिना जातिगुणकर्मतुल्य-योगक्षेमत्वमुक्तम् । "तदनुप्रविश्य सच्च त्यच्चाभवत्" "विश्वमेवेदं पुरुषः तद्विश्वमुपजीवति" इति तात्स्थ्यमेव सामानाधिकरण्यनिबन्धनमुक्तम् । एवं चिदचिदन्तरात्मतया तत्तत्कारणतया तदाधारतया चानुप्रवेशपूर्वकं स्वपर्यन्तपर्यवसितनामरूप-व्याकरणप्रवीणपुरुषान्तररहित इत्यद्वितीयशब्दार्थ इति पर्यवसितम् । ततः मायोपाधिविकारसङ्करकथा का नाम? असङ्गतैवेति प्रतिपादिताः । "पतिं विश्वस्यात्मेश्वरम्" (तै.ना.१०) "ऐतदात्म्यमिदं सर्वं" (छा. ६-८७) "य आत्मनि तिष्ठन् यः पृथिव्यां तिष्ठन्" (बृ.का.५-७-२२) इत्यादिना चिदचिद्विशिष्टाद्वैतभगवत एव तत्त्वतया प्रतिपादितत्वात् केवलाद्वैतवादः अत्यन्तासङ्गत एवेति प्रत्यपादयन् । इत्थम् अद्वितीयश्रुतेरर्थे निश्चिते का गतिरभेदवादानामित्यत आह - हे श्रीरङ्गधाम प्रवणविजयिभिः नाम प्रच्छन्नबौद्धसिद्धान्तविजयवद्भिः वैदिकैः सार्वभौमैः कारणश्रुतिगुणश्रुतिनिर्गुणश्रुतिभेदश्रुत्यभेदश्रुति-घटकश्रुतीनां प्रामाण्यं परिगृह्य परतत्त्वनिर्णायकैः भगवद्व्यास-पराशरादिपरमर्षिमार्गानुसारिभिः श्रीमद्यामुनमुनिभाष्यकारप्रभृतिभिः "तत्त्वमसि श्वेतकेतो सर्वं खल्विदं ब्रह्म ऐतदात्म्यमिदं सर्वम्" एताः श्रुतयः "सकलमिदमहं च वासुदेव" इति श्रीविष्णुपुराणवचनं च एवमाद्याः भवतः तस्य प्रपञ्चस्य चाभेदवादा व्याख्याताः किमिति स्थितिः उत्पत्तिः प्रवृत्तिः ग्रसनम् अन्तःप्रविश्य नियन्तृत्वं व्यापकत्वम् एतैः शेषभूतः अशेषप्रपञ्चः अन्तरात्मनः ते वपुरिति "सर्वं खल्वि"त्याद्याः (छा. ३-१४-२) भवतः तस्य चाभेदवादाः व्याख्याताः । भगवतः प्रपञ्चस्य च शरीरात्मभाव एवं सर्वं खल्विदं ब्रह्म" "तत्त्वमसी"त्यादिसामानाधिकरण्यस्य प्रयोगहेतुरिति निष्कृष्टोऽर्थः ।

सर्वशरीरकत्वाद्ब्रह्मणः 'सर्वं खल्विदं ब्रह्मे'ति सामानाधिकरण्यमिति निर्णयः पराशरभट्टार्याणामभिप्रायः। एवं श्रीकूरेशतनयाः चिदचिदात्मकप्रपञ्चसामानाधिकरण्यस्य हेतुः तदुभयशरीरकत्वमेवेत्युक्त्वा तदुभयनियन्तृत्वरूपं सर्वेश्वरत्वं सोपबृंहणश्रुतिशतबहुमतमिति बहुचमत्कारमनेन पञ्चविंशतितमेन श्लोकेन व्याख्यातुकामाः -

"सराजमराजकं पुनरनेकराजं तथा ।
यथाभिमतराजकं जगदिदं जजल्पुर्जडाः ।।" (२५) इति,

अनभिज्ञाः जल्पन्तीति तदसदिति अवशचित्रितातरतमत्वतर्काङ्गिका श्रुतिः । चिदचिती त्वया नित्यं राजन्वति जगाविति "सदेव सोम्येदमग्र आसीत्" (महोप. १-१) "एको ह वै नारायण आसीत्, न ब्रह्मा नेशानः विश्वमेवेदं पुरुषं तद्विश्वमुपजीवति पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्" (तै.ना. १३) "नारायणं महाज्ञेयं विश्वात्मानं परायणम् । नारायणपरं ब्रह्म तत्त्वं नारायणः परः ।। नारायणपरो ज्योतिरात्मा नारायणः परः ।।" 'यच्च किञ्चित् जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा' अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' ।(तै.ना. ११) इत्यादिश्रुतिशतैः ब्रह्मरुद्रपारम्यनिषेधपूर्वकं पुरुषोत्तमस्य नारायणस्यैव कारणत्वपुरस्कारेण चिदचदीश्वरत्वं सादरं प्रतिपादितमिति नित्यराजन्वती इति पदेन विवृतवन्त इति व्याख्यात्रभिप्रायः सिद्धान्तस्य विजयध्वज एव । एवं वादिकौतस्कुतेभ्यः उचितं जलमर्पयामं इति प्रतिपादयन्ति । हे श्रीरङ्गाम्भोधिचन्द्रोदय, ब्रह्माद्याः भृकुटिभटतया सृज्यवर्गे उद्घाटिताः अवतारप्रस्तावे नोद्घाटिताः तेन हेतुना त्वन्न, तव सदृशाश्च न । अवतारप्रस्तावोद्-घाटनाभवात् भवानपि न भवन्ति । भृकुटिभटतया सृज्यवर्गोद्घटनात् भवत्सन्निभाश्च न भवन्तीत्यर्थः । त्वत्परैः श्रुतिमुनिवचनैः नाम 'वेदाहमेतं पुरुषं महान्तं, ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' 'श्रद्धया देवो देवत्वमश्नुते' ।(कठ. ३-३) 'मातरं पद्ममालिनीं'

'राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि ।
अन्येषु चावतारेषु विष्णोरेषानपायिनी ।।'

'अनन्या हि मया सीता भास्करेण प्रभा यथा ।'

(श्रीमद्रा. ५-२१-१६)

इत्यादिभिः वाक्यैः लक्ष्मीनायकेन त्वया विश्वम् एकाधिराजं प्रतिपाद्येति शेषः । श्रुत्युक्तपरित्यागेन युक्तिमात्रशरणवादिभ्यः युक्तं निवासोदकमर्पयाम इति वदन्ति स्म । श्रियःपतेरेव जगदीश्वरत्वसमर्थनानुगुणश्रुतिस्मृतिगणफणितेन केवलयौक्तिकस्तोमो मृतप्रायो भवेदिति अभिप्रायं प्रकटयन्ति स्म।

एतावत्पर्यन्तं 'हर्तुं तमस्सदती च विवेक्तुम्' इत्यारभ्य बाह्यकुदृष्टिमतनिराकरणानुगुणसोपबृह्मणश्रुतिप्रमाणताप्रतिपादनपूर्वकं श्रीमतो भगवत एव चिदचदात्मकस्य जगतः कारणत्वमीश्वरत्वं च समर्थितम् । लक्ष्मीनेत्रा त्वया जगदेकातपत्रमित्यनेन च द्वयोत्तरखण्डश्रीमच्छब्दार्थोप्यनुसंहितः । अनन्तरं नारायणशब्दार्थं विवरिष्यन्तः कारणत्वानुगुणषट्कपरिष्कृततां प्रपञ्चयन्ति स्म ।

**नारायणशब्दार्थविवरणम् -**

श्रीपराशरमहर्षिणा श्रीविष्णुपुराणे श्रीमन्नारयणस्य पारम्यं महता वैभवेन प्रतिपादितम् । यथा-

'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।

भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः।।' (वि.पु. ६-५-७९)

तमेवार्थं मनसि निधाय श्रीवत्साङ्कसुताः स्वकीये श्रीरङ्गराजस्तवे उत्तरशतके द्वयोत्तरखण्डवाक्ये नारायणाय इत्यत्र नारायणपदं विवरिष्यन्ति स्म। हे रङ्गेश निर्लेपाः मङ्गलाः ये दयावात्सल्यादयः निरवद्याः स्वतसिद्धाः निरवधयो निरुपमाश्च त्वयि विराजन्ते। ते न संख्या भवन्ति, परन्तु षट्संख्याः एताः भगवच्छब्दाभिधेयतया प्रतीताः ज्ञानैश्वरीशकनवीर्यबलार्चिषः दीप्तयः मणीव त्वाम् अर्घरहितं कुर्वन्ति, नाम अलंकुर्वन्तीति प्रतिपादयामासुः । ज्ञानादिषड्गुणानां स्वरूपं स्वयमेव भट्टाचार्याः प्रतिपादयन्ति। तत्र प्रथमोपात्तस्य ज्ञानस्वरूपम् -

'युगपदनिशमक्षैस्सैस्स्वतोवाक्षकार्ये

नियममनियमं वा प्राप्य रङ्गाधिराज ।

करतलवदशेषं पश्यसि स्वप्रकाशं
तदवरणममोघं ज्ञानमाम्नासिषुस्ते ।।' (२८)

हे रङ्गाधिराज त्वं स्वैः चक्षुरादीन्द्रियैः इन्द्रियनैरपेक्ष्येण वा केवलधर्मभूतज्ञानेन वा चक्षुरादीन्द्रियकार्ये रूपादिग्रहणे चक्षुषा रूपमेव ग्राह्यं श्रोत्रेण शब्द एव ग्राह्यः इत्यादिनैयत्यं तादृशनैयत्याभवं वा श्रोत्रेण रूपरसादिग्रहणं चक्षुषा शब्दस्पर्शादिग्रहणं वा प्राप्या सर्वदापि उभयविभूत्यन्तर्भूतं समस्तं वस्तु एकदैव करतंलवत् पश्यसि अबाधितविषयं स्वस्मै प्रकाशमानं ज्ञानान्तरनिरपेक्षप्रकाशं तदावरणं नाम प्रतिबन्धगन्धरहितं पौनःपुन्येन उपनिषदः प्रतिपादयामासुः । सदापि स्वत एव युगपत्कृत्स्नसाक्षात्कारो भगवद्ज्ञानमिति भावप्रतिपादयन्ति । अस्मिन् विषये कूरेशमिश्राणां श्रीवैकुण्ठस्तवश्लोकः -

'ज्ञानात्मनस्तव तदेव गुणं गृणन्ति
तेजोमयस्य हि मणेः गुण एव तेजः ।
तेनैव विश्वमपरोक्षमुदीक्षसे त्वं
रक्षा त्वदीक्षणत एव यतोऽखिलस्य ।।' (५१)

स्मरणयोग्यो भवति । एवं भगवतः असाधारणं ज्ञानं पुनः एकोनत्रिंशतितमे श्लोके प्रतिपादयन्ति। तस्यार्थस्तु हे रङ्गपते त्वं नयनश्रवणः दृशा शृणोष्यथ करणैरपि कामकारिणः महेशितुः ते सार्वपथीनमीक्षणं घटत इति विष्वङ्मुखं लौकिकसाक्षात्कार-विलक्षणाकारं कल्पत इति वदन्ति । अत्र श्रुतिप्रमाणानि 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।' 'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतः स्यात् ।' (तै. ना. १-२) 'यस्सर्वज्ञस्सर्ववित्' (मु.१-१-९) 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वेता. ६-८) 'योऽस्याध्यक्षः परमे व्योमन्' इत्यादिश्रुतिशिरः-प्रतिपादितस्य परमपुरुषसाक्षात्कारस्य लौकिकजनविलोकन-विसजातीयानेकातिशयवत्वं युक्तमित्याशयः समञ्जस एव ।

भगवतः ऐश्वर्यगुणस्वरूपम् -

अथ नारायणस्यैश्वर्यगुणस्वरूपविषये रङ्गराजस्तवरूपेण स्वाभिप्रायमाविश्चक्रुः तत्रभवन्तः पराशरार्याः । हे भगवन् रङ्गशायिन् सार्वज्ञ्येन जगदज्ञमूलम् इति, निर्विशेषचिन्मात्रब्रह्ममूलं वदन्तः निर्गुणब्रह्मवादिनः शङ्करादयः अब्रह्मात्मकचेतनं प्रकृतिकारणं वदन्तः साङ्ख्यादयः निरस्ताः । ऐश्वर्यगुणः जगदुपादनकारणभूतं त्वां सांख्योक्तात् साक्षिमात्रात् चेतनात् परमुत्कृष्टम् करोति । अब्रह्मात्मिका प्रकृतिः साक्षिभूतचेतनसन्निधानमात्रात् महदादिविकारं प्राप्नोति । वत्ससन्निधानात् गौरिव अयस्कान्तसन्निधानात् लोहमिव चेति किल सांख्याभ्युपगमः इत्थमैश्वर्यगुणस्य कारणत्वानुकूलं फलमुक्त्वा तत्स्वरूपमाहुः अप्रेर्य इति । यत्र यस्मिन् ऐश्वर्यगुणे सति, अन्यैरप्रेर्यः स्वतन्त्रः अगणयन् इच्छालेशतः सङ्कल्पलवात् सदसत्कर्म चैत्र्या पुण्यपापवैचित्र्येण देवमनुष्यादिविविधाकारं जगत् एकदेव प्रतिबन्धरहितं यथा तथा आविश्चकर्थ। तादृशं भवदैश्वर्यं भवतीति भावः । अनन्य-नियाम्यतया निरङ्कुशस्वतन्त्रस्य सर्वत्राप्यप्रतिहतसङ्कल्पवत्व-मैश्वर्यमिति विज्ञापितवन्तः । ऐश्वर्यगुणविषये श्रीकूरेशमिश्राणां श्रीवैकुण्ठस्तवे एवं प्रत्यपादि । तद्यथा -

'संवर्तवर्ति निखिलं निरभिज्ञमज्ञं
चित्रे च कर्मणि यथार्हमहो नियच्छन् ।
सद्यः कृमिद्रुहिणभेदमभेदमेतत्
आविश्चकर्थ सकृदीक्षणदीक्षणेन ।।' (वै. स्त. ६४)

एवमेव

'विश्वं विचित्रमविलक्षणवीक्षणेन
विक्षोभयस्यनवधिर्बत शक्तिरैशी ।' (५५)
'रूपप्राकारपरिणामकृतव्यवस्थं
विश्वं विपर्यसितुमन्यदसच्च कर्तुम् ।।'
'क्षाम्यन् स्वभावनियमं किमु दीक्ष्यते त्वं
स्वातन्त्र्यमैश्वरमपर्यनुयोज्यमाहुः ।' (५६)

सर्वज्ञस्य भगवतः नारायणस्य सर्ववस्तुसर्वकार्यप्र
हतसङ्कल्पवत्त्वमेव ऐश्वर्यं भवति। अज्ञसाक्षिभूतयोरपि
कारणभूत इत्ययं वाद एव श्रेयन् । अयमेव विषयः श्रीपाञ्
सुप्रसिद्धः।

अथ भट्टपादाः भगवतः तृतीयं गुणं शक्तिं विशादयितुकामाः

> 'कार्येऽनन्ते स्वतनुमुखतस्त्वामुपादानमाहुः
> सा ते शक्तिस्सुकरमितरच्चेति वेलां विलङ्घ्य ।
> इच्छा यावद्विहरति सदा रङ्गराजानपेक्षा
> सैवेशानादतिशयकरी सोर्णनाभौ विभाव्य ।।' (३१)

हे श्रीरङ्गराज अनपेक्षा ते इच्छा सदा सुकरं इतरच्चेति दु
सीमामतिक्रम्य यावत् विहरति, असंख्ये कार्ये त्वां
चिदचदीश उपादनकारणमाहुः । 'तदैक्षत बहु स्यां प्र
'यतो वा इमानि भूतानि जायन्त' इत्याद्या श्रुतयः प्रमाणभू
अनन्तकार्योपादनभूता ते शक्तिः ईशानात्
अतिशयितजगन्निर्माणकर्त्री भवति । सा ऊर्णनाभौ
साक्षात्कार्या भवति । अमुमेव विषयमधिकृत्य मुण्डकोपनि
प्रतिपादितम् । यथा -

> 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयस्
> यथा सतः पुरुषात् केशलोमानि तथाक्षरात् संभवतीह वि

इति मुण्डकोपनिषत् (१-१-७) यथा ऊर्णनाभिः शरीरा
निर्माय भूयो ग्रसति तथा सर्वेश्वरोऽपि सूक्ष्मचि
स्वशरीराभ्यां चिदचिद्भ्यां जगन्निर्माय पुनः प्रलये कबलयति
भागवते यथा -

> 'यथात्ममायायोगेन नानाशक्त्युपबृंहितं
> विलुम्पन् विसृजन् गृह्णन् बिभ्रदात्मानमात्मना ।
> क्रीडस्यमेघसङ्कल्प ऊर्णनाभिर्यथोर्णुते
> तथा तद्विषयां देहि मनीषां मयि माधव ।।'
>
> (श्री.भाग. १-९-२६)

कल्याणगुणवैभवनिरूपणप्रकरणानुगुणा सैवेशाना अतिशयकरी भवतीति उक्तवन्तः । अथ भगवतः बलस्य स्वरूपं फलं च द्वात्रिंशतितमे श्लोके भट्टपादाः प्रतिपादयन्ति स्म । यथा - 'स्वमहिमास्थिति ... बलं तव पराश्रितकारणवारणम्' इत्यस्मिन् श्लोके हे रङ्गनाथ स्वकीये महिम्नि विराजमानः त्वं भृशक्रियोऽपि अनुत्पन्नायास एव अशेषं जगत् स्ववपुरिव वहसीति यत् इदं बलं पराश्रितकारणवारणं भवति । स्वकीयमहिमप्रतिष्ठितस्य सृष्ट्यादिकर्तुः समस्तचिदचिन्निवह-वहनेप्यश्रमत्वं बलं तत्फलं च पराधिष्ठित-कारणवैलक्षण्यं भवत्येव । भवानतिविलक्षणः इति बलवानिति भगवन्तं नारायणं स्तुवन्ति स्म।

**वीर्यगुणविवरणम् -**

एवं ज्ञानमैश्वर्यशक्तिबलगुणनिरूपणानन्तरं पराशराः वीर्यगुणं प्रति स्तुवन्ति ।

'मृगनाभिगन्ध इव यत्सकलार्थान्
निधिसन्निधेरविकृतो विकृणोषि ।
प्रिय रङ्गवीर्यमिति तत्तु वदन्ते
सविकारकारणमितो विनिवार्यम् ।।' (३३)

हे श्रीरङ्ग त्वं मृगनाभिगन्ध इव विकाररहितस्सन् स्वकीय-सन्निधानमात्रात् समस्तपदार्थान् विकृणोषि, नाम प्रादुर्भावयसीति यत् तत्तु वीर्यमिति वदन्ति । स्वयमविकृतत्वे सति विकाररहितत्वं वीर्यमिति पर्यवसितम् । कस्तुरीपरिमालो हि स्वयमविकृत एव स्वसन्निधानादितर-मनोविकारकारणमिति तदुदाहरणं दत्तम् । अस्मात् वीर्यगुणात् सविकारकारणं विनिवार्यमिति विकारान्तरभजनेन कार्योत्पादक-मृत्तन्वादिकारणवैलक्षण्यमेव फलितम्। यद्वा निर्विशेषं ब्रह्मैव जगदाकारेण परिणमत इति विकारवादियादवप्रकाशमतं निरस्तमिति सूचितवन्तः । सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणो जगदुपादानत्वेऽपि स्वभावान्थाभावरूपविकारः चेनतस्य, स्वरूपान्याथभावोचेतनस्यैवेति वदन्ति ।

तेजोगुणनिरूपणम् -

'सहकार्यपेक्षमपि हातुमिह तदनपेक्षकर्तुता ।

रङ्गधन जयति तेज इति प्रणतार्तिजित्प्रतिभटाभिभावुकम् ।' (३४)

श्लोकेऽस्मिन् भट्टपादाः भगवतः तेजोगुणमिधिकृत्य विशदीकुर्वन्ति स्म। हे रङ्गधन भवतः षड्गुणानां निरूपणप्रकरणे स्वस्मात्पृथग्भूत-सहकारिकारणान्तरसापेक्षमपि व्यवच्छेत्तुं, सहकार्यन्तरानपेक्षाकर्तुत्वं तेजसः लक्षणमिति प्रणतार्तिजित् प्रतिभटान् अभिभूतान् करोति इति, अनाश्रितजनतापप्रदं तेज इति गुणः सर्वोत्कर्षेण वर्तत इति अनपेक्षकर्तृताकर्त्रि इति, उक्तविशेषणद्वयविशिष्टतेज इति जयतीति वा मतान्तरेभ्यः सहकारिकारणतया परिगृहीतानां कालादीनामपि भगवच्छरीरतया सहकार्यन्तरानपेक्षत्वं भगवत एवेति भावः भोग्यावह एव। अत्र श्रीकूरेशमिश्राणां श्रीवैकुण्ठस्तवश्लोकः स्मरणीयः एव।

'संवर्तसंभृतकरस्य सहस्ररश्मेः
उस्त्रं तमिस्त्रयदजस्त्रविहारहारि।
नित्यानुकूलमनुकूलनृणां परेषाम्
उद्वेजनं च तव तेज उदाहरन्ति।।' (श्रीवै. ५७)

एवमेवाष्टश्लोकीव्याख्यानवेलायां 'इन्नारायणपदं ज्ञानशक्यादि-समस्तकल्याणगुणङ्गलैयुम् शोल्लामेयाकिलुम् इङ्गे प्रकरणबलत्ताले कैङ्कर्यत्तिनुडय स्वरूपप्राप्तताहेतुवान स्वामित्वत्तिले नोकायिरुक्कुम् आनालुम् ज्ञानशक्त्यादिगुणयुगमुम् अनुसन्धेयम् । इतिल् ज्ञानम् कैङ्कर्याश्रयभूतमुडैय ज्ञानविकासत्तुकुं सौन्दर्यप्रकाशत्तुक्कुम् शक्ति अवनुडय सौन्तर्यसौकुमार्यादिकलिले मग्ननाम् न शास्त्रं नैव चक्रमः एन्निरपडिये अडैवुकेट्टु ओरु व्यापारक्षमनल्लतवलविले बलम् अनुभवजनितप्रीत्यतिशयत्ताले उडैकुलैप्पट्टु नीरायलैन्दुकुरैयुरुक्कु मलवानवारे इवनै धरिप्पित्तु कैङ्कर्यं कोल्चुकैक्कु उरुत्पायिरुक्कुम्। ऐश्वर्यम् क्रियतामिति मां वद एन्नुम् मुकप्पेकुविप्पाणिकोळ्ळाय् एन्नुं शोल्लुकिर पडिये इवनै तनक्कु उकप्पान कैङ्कर्यत्तिले नियमित्तु कोळ्ळुकैक्कु उरुप्पायिरुक्कुम् वीर्यमावदु नियमिकुडत्तिल् अनायासेन

नियमिक्कैक्कु उरुप्पायिरुक्कुम् तेजस्सु कैङ्कर्यत्तुक्कु अन्तरायमान सौन्दर्यादिकलिले मग्नरानवरै निवर्तिप्पित्तु कैङ्कर्यङ्गोळ्ळुंकैक्कु उरुप्पायिरुक्कुम्। आक ज्ञान शक्त्यादि षड्गुणङ्ळुम् कैङ्कर्यत्तुक्कु उपयोगियाय् इरुक्कुम्।' इति षड्गुणानां कैङ्कर्य एव पर्यवासनमिति द्वयार्थविचारे श्रीमन्तः अप्पन् श्रीनिवासाचार्यररुळिच्चेयदव्यारव्यानपुस्तके २३९ पृष्टे द्रष्टुं शक्यते । एवं करणत्वोपयुक्तज्ञानादिगुणषट्कस्वरूपं ततो मतान्तरवाद्यभ्युपगतकारणवैलक्षण्यं च सम्यक् प्रतिपाद्य, सम्प्रति ज्ञानावान्तररूपानन्दगुणस्वरूपं निरुपयन्तः स्थालीपुलाकन्यायेन निखिलस्य गुणस्यापरिच्छेदत्वं भट्टपादाः प्रतिपादयन्ति । यथा चतुस्त्रिंशतितमे श्लोके -

'मर्त्योत्थायं विरिञ्चावधिक - - - का कथा चित्रवाचोः'

इत्यस्मिन् श्लोके हे रङ्गेन्द्र मर्त्योत्थायं विरिञ्चावधिकमुपरि च 'यौवनानन्दपूर्वमुत्प्रेक्ष्य आनन्दवल्ली तव गुणनिवहं मीमांसमाना पथि परं मूकलायं निलिल्ये' इति वदन्तः 'सैषानन्दस्य मीमांसा भवति युवा स्यात् साधु युवाध्यायकः आशिष्ठो द्रढिष्टो बलिष्ठः, तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्, स एकोमानुष आनन्दः' इत्यादिका शय्योत्थायं विरिञ्चाभ्यधिकं उपरि च यौवनानन्दपूर्वमुत्प्रेक्ष्य आनन्दवल्ली तव गुणनिवहं मीमांसमाना पथिपरं मूकलायन्निलिलिल्ये। चतुर्मुखपर्यन्तं मनुष्यानन्दमारभ्य क्रमेण मनुष्यगन्धर्वदेवगन्धर्वपितृचिर-लोकलोकाजानदेवकर्मदेवदेवेन्द्रबृहस्पतिप्राजापत्यानन्दपर्यन्ताभिधानात् 'स एकः प्रजापतेरानन्दः' (तै. आ. ८) इत्याभिधानानन्तरं 'ते ये शतं प्रजापतेरानन्द' इत्यभिधानात् उपरि चोत्प्रेक्षणम् अर्थसिद्धमिति भावः। अत्र भगवद्यामुनमुनेः स्त्रोत्रं स्मरणीयं भवति ।

'उपर्युपर्यब्जभुवोऽपि पुरुषान् प्रकल्पते ये शतमित्यनुक्रमात् ।
गिरस्त्वदेकैकगुणावधीप्सया सदा स्थिता नोद्यमतोऽतिशेते ।।'

(स्तोत्ररत्नम् १९) एवं तव गुणगणं गुणान्तराणामप्यानन्दवल्लीधोरणी-स्थालीपुलाकन्यायतः सिद्ध्येत् । यौवनानन्दमीमांसापूर्वकं सम्यग्विचार-यन्ती सती मीमांस्यत्वेन स्वाभिमतं भगवदानन्दं यथावद्विषयीकर्तुं न

शक्नोतीत्यर्थः । किन्तु मानुष्यानन्दादिके वर्त्मन्येव परिभ्रमति यथा 'स एको ब्रह्मण आनन्दः' 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' 'आनन्दं ब्रह्मणो विद्वान्' इति मूकवन्निलीनाभूदिति नाश्चर्यावहः इति वदन्ति । एवं सति ते कल्याणगुणानाम् अवधिः गणनासंख्याकल्याणगुणानां संख्यायाम् एकैकगुणस्य महिमापरिच्छेदे च मनोवचनसोः का कथा का प्रसक्तिः, आनन्दवल्यां परिच्छेद्ययोः कल्याणगुणगणसंख्यावैभवयोः परिच्छेदे मादृशानामपि मनोवचनयोः कः प्रसङ्ग इति पराशरभट्टार्याः भगवतः कल्याणगुणगणानां मङ्गलाशासनमकार्षुः ।

अत्रायं श्लोकः श्रीवेदान्ताचार्याणां स्मरणीय एव -

'सङ्ख्यातुं नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणः ।
आनन्त्यात् प्रथमो राशिः अभावादेव पश्चिमः ।।'

इत्थं श्रीपराशरभट्टार्याः पूर्वाचार्यपरंपरानुगुणं स्वाचार्यपर्यन्तं परिगीतानि भगवतः कल्याणगुणगणविलसितानि मङ्गळवाक्यानि हृदये अनुसन्दधानाः भगवतः षाड्गुणैश्वर्यविभवं स्तोत्रयामासुः । इत्थं श्रुत्यन्तसन्तत्यपरिच्छेद्यवैभवापि भगवतो मार्दवादयो गुणाः श्रीरङ्गधामनि साक्षात्कार्या इति विज्ञापयन्ति ।।

श्रुतिशिरस्स्वपि निगूढाः अमी मार्दवादयः श्रीरङ्गे समस्ताः साक्षात्कार्याः इति विशदीकुर्वाणाः षट्त्रिंशतितमश्लोकमारभन्ते।

'न्यधायिषत ये गुणा निधिनिधायमारण्यके-
ष्वमीम्रदिमचातुरी प्रणतचापलक्षान्तयः ।
दयाविजयसौन्दरीप्रभृतयोऽपि रत्नौघवत्
जगद्व्यवहृतिक्षमा वरद रङ्गरत्नापणे ।।' (३६)

हे वरद उपनिषत्सु ये गुणाः निधिवन्निगदिताः ते उपदेश्यतां विना स्वयं परिदृश्यमानाः मार्दवचातुर्याश्रितवात्सल्यक्षमाः दयाविजयसौन्दरी-प्रभृतयोऽपि रत्नौघवत् श्रीरङ्गाख्यरत्ननिषद्यायां सर्वजन-व्यवहारयोग्याः भवन्ति । पण्डितपामरविभागाभावेन कृत्स्नचेतनानामपि क्रयविक्रयार्हाः भवन्तीत्यर्थः । स्वयंदृष्ट्वा परेषामपि प्रदर्शयितुं शक्या भवन्तीति भागवतानां वचनम् । श्रीरङ्गनाथस्य गुणाः मधुमधुरतमा

भवन्ति। तत्राश्रितविश्लेषासहिष्णुता मार्दवम् भवति । अघटन-घटनासामर्थ्यं चातुर्यम् भवति । आश्रितदोषेष्वपि गुणबुद्धिः वात्सल्यम् भवति । अपराधसहिष्णुता क्षान्तिः भवति । परदुःखासहिष्णुता दया भवति । एवं प्रभृतिशब्देन सौशील्यसौलभ्यादयः स्वरूपगुणाः लावण्य-तारूप्यादयो विग्रहगुणाश्चोच्यन्ते । एते गुणाः वयं श्री रङ्गराजसमीपे पश्याम इति । इवि एल्लाम् नम् नम्बेरुमाळ् पक्कलिले काणलाम् इति वचनं स्मारयन्ति ।

'वशी वदान्यो गुणवान् ऋजुश्शुचिः
मृदुर्दयालुर्मधुरः स्थिरस्समः ।
कृती कृतज्ञस्त्वमपि स्वभावतः
समस्तकल्याणगुणामृतोदधिः ।।' (स्तोत्ररत्नम्, १८)

इति अयं श्लोकः पराशरार्यान् प्रेरयतीवात्र दृश्यते । इत्थं श्रीपराशरभट्टार्याः बृहदारण्यकोपनिषादि निधिवत् निक्षिप्तगुणसमूहं प्रकटीकृतवन्तः । एते गुणाः रत्नापणि रत्नसमूह इव जगति व्यवहर्तुं योग्या इति उपदिशन्ति स्म । एवं स्थितं परमपुरुषं भगवन्तं त्वां त्वमेव वेत्सि । हे वरद यमाश्रित्यैव ते सद्गुणाः आत्मंभर इव प्रसिद्धिं प्राप्नुवन्ति । एवं ज्ञानादिगुणाः भगवन्तं समाश्रित्य अतिशयवन्तो भवन्तीति पराशराणां कथनं न सत्यदूरम्। भगवतो नित्योदितदशा शान्तोदितदशेति च दशाद्वयमस्ति । तत्र शान्तोदितदशा स्वात्मानुभवदशा, इतरा तु विभूत्यनुभवदशा । क्वचित् व्यत्यासेनापि प्रयोगो दृश्यते । 'अतिपतितावधि स्वमहिमानुभवप्रभवत् सुखकृत-निस्तरङ्गजलधीयितनित्यदशम्' (२३) इति श्रीकूरेशमिश्राः सुन्दरबाहुस्तवे प्रतिपादितवन्तः । त्वमेव त्वां वेत्थेति श्रुतिवाक्यमेवात्र प्रयुक्तम् । गुणषट्कपरिपूर्णभगवदनुभवस्यैव प्रपन्नजनप्राप्यत्वात् उत्तर-वाक्यविवरणरूपेऽस्मिन् शतके ज्ञानादिगुणगणपरिपूर्णता भगवतः प्रतिपादितेति सम्प्रदायः । 'यमाश्रित्यैवात्मम्भरय इव ते सद्गुणगणाः' इति ३७तमे श्लोके विशदीकृतवन्तः ।

इत्थं समस्तकारणत्वोपयुक्ततया समर्धितज्ञानशक्त्यादि-कल्याणगुणगणवैशिष्ट्यरूपसर्वेश्वरत्वगन्धसम्बन्धलेशेनापि पाकशासनादीनां ईश्वरत्वाभिमानरूपं मोहं महामहिम्नोऽपि भगवतः तद्राहित्यहेतुं महामहिम्नस्वस्वरूपानुरूपत्वं भवतीति 'आघ्रायेश्वरगन्धमीशसदृशं मन्यास्तवेन्द्रादयो' इत्यस्मिन् अष्टत्रिंशतितमे श्लोके विवृण्वन्ति स्म । हे रङ्गरसिक इन्द्रादयः तव ईश्वरगन्धं तव सर्वेश्वरत्वं परिमळम् आघ्राय स्वात्मानं सर्वेश्वरसदृशामभिमन्यमानास्सन्तः मोहं प्राप्नुवन्ति । त्वमपरिच्छेदस्य महिम्नः कणेहत्य नाम श्रद्धाप्रतिघातं कृत्वा निरवधिं भूमानमपि अनादृत्यानाविलो भवसि इति यत् अत्र न विस्मयेमहि । त्वं त्वन्महिम्नः परः वैपुल्यात् महितः ते किं नाम न सात्म्यम्? किं वा न सदृशं सर्वोऽपि सदृशो भवतीत्यर्थः । भगवतः स्वरूपस्वभावयो-रन्योऽन्यसदृशवैभवत्वान्निरवधिना भूम्नाप्यकुलषत्वं नाश्चर्यावहमिति पर्यवसितार्थं सूचितवन्तः ।

अथ षाड्गुण्यपरिपूर्णता परवासुदेवस्यैव, सङ्कर्षणादि-व्यूहत्रये तु तत्तत्कृत्यानुगुणौ द्वौ द्वौ गुणावेव पुरस्कृताविति विपुलं वदन्तः स्तुवन्ति स्म।

'यथा षाड्गुण्याद्वासुदेवः पर इति स भवन्मुक्तभोग्यो बलाढ्या-

द्बोधात्सङ्कर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात् ।
प्रद्युम्नस्सर्गधर्मौ नयसि च भगवन् शक्तितेजोऽनिरुद्धो
बिभ्राणः पासि तत्त्वं गमयसि च तथा व्यूह्य रङ्गाधिराज।।'

(३९) अस्मिन् श्लोके हे श्रीरङ्गराज त्वं षड्गुणैश्वर्यपरिपूर्णः परवासुदेवो भूत्वा मुक्तैरनुभाव्यसे व्यूहत्वमधिष्ठाय ज्ञानबलाभ्यां रुद्राधिष्ठितासङ्कर्षणमूर्तिः भूत्वा संहरसि शास्त्रं वितनुषे इति संहारशास्त्रप्रदाने ज्ञानबलविशिष्टसङ्कर्षणकृत्ये इति; ऐश्वर्यवीर्याभ्यां प्रद्यूम्नस्सन् स्वर्गधर्मो नयसि चेति ऐश्वर्यवीर्यवैशिष्ट्येन प्रद्युम्नमूर्तिस्सन् चतुर्मुखमधिष्ठाय सृष्टिं धर्मं च प्रवर्तयसीति शक्तितेजोबिभ्राणः शक्तितेजसी दधानः अनिरुद्धस्सन् रक्षसीति तत्त्वं गमयसीति च नाम

स्वस्वरूपाविर्भावरूपं मोक्षं च प्रापयसीति जगदुः । अत्र चतुर्मुखाधिष्ठातुरैश्वर्यविशिष्टस्य प्रद्युम्नस्य सृष्टिधर्मप्रवर्तने कृत्ये शक्तितेजोविशिष्टस्यानिरुद्धस्य स्वेनैव रक्षणमोक्षप्रदाने कृत्ये इति भगवतो व्यूहभेदप्रसक्तकृत्यभेदानुगुण्येन तत्तद्गुणद्वयमात्राविष्कारं भगवच्छास्त्रोक्तप्रकारेण विवृतवन्तः ।

अत्र कूरेशमिश्राणां श्रीवरदराजस्तवश्लोकौ स्मरणीयौ भवतः -

'गुणैषड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ
ततस्तिस्रस्तेषां त्रियुगयुगलैर्हि त्रिभिरभुः ।
व्यवस्था या चैषा ननु वरद साविष्कृतिवशात्
भवान् सर्वत्रैव त्वगणितमहामङ्गलगुणः ।।' (१६)

तथैव

'इयं वैयूही वै स्थितिरथ किलेच्छाविहृतये
विभूतीनां मध्ये सुरनरतिरश्चामवतरन् ।
सजातीयस्तेषामिति तु विभवाख्यामपि भजन्
करीश त्वं पूर्णो वरगुणगणैस्तान् स्थगयसि ।।' (१७)

एवं श्रीपराशरभट्टार्याः परवासुदेवः एक एव सृष्टिस्थितिसंहारान् करोतीति आगमप्रामाण्येन प्रतिपादितवन्तः । 'गुणविभागव्यूह्यकृत्यं रक्षामोक्षप्रदत्वपर्यन्ताम्' इति श्रीभाष्यमङ्गलश्लोकविवरणवेलायां रक्षैकदीक्षे - श्रुतप्रकाशिकायां तदाधारेण लिखिता।

**व्यूहचतुष्टयविवरणम्** -

इत्थं पराशराः उक्तप्रकारस्य व्यूहचतुष्टयस्यापि प्रत्येकावान्तरव्यूहाः चत्वारः सन्तीति भगवच्छास्त्रप्रसिद्धं संक्षिप्य प्रतिपादयामासुः । यथा 'जाग्रत्स्वप्नात्यलसतुरीय - - - श्चातुर्व्यूहं वहसि चतुर्था' इत्यस्मिन् श्लोके हे स्वामिन् जाग्रत्स्वप्नात्यलसतुरीयप्रायाः ये ध्यातृक्रमाः तद्वद्भिः उपास्यः ध्यातृणामुपासकानां क्रमाः चतुर्विधाः भवन्ति इति, तत्र प्रबुद्धाधिकारिणक्रमः, जागत्प्राय-क्रमः, तस्मादीषदपकृष्टबोधवदधिकारिणक्रमः, स्वप्नप्रायक्रमः, तस्मादप्यपकृष्टबोधवदधिकारिक्रमः, अत्यलसप्रायक्रमः, अतिस्वल्पबोधवदधि-

कारिक्रमः, तुरीयप्रायक्रमः तत्तन्मूर्त्यनुगुणपरिच्छदसहित
इत्थमुक्तविशेषणद्वयविशिष्टस्त्वं चतुर्धा चतुर्णां व्यूहानां स
वासुदेवादिव्यूहचतुष्टयमपि प्रत्येकं चतुर्धा व्यूहावस्थानं
चतुष्टयविशिष्टाधिकारिचतुष्टयोपासनसौकर्यायेति कमपि
तत्त्वं निवेदयामासुः ।

**नित्यानां चेतनानां सृष्टिः प्रकृतिविकारकरणकलेबरघ**
दया कार्येति कथनम् -

'अचिदविशेषितान् प्रलयसीमनि संसरतः
करणकलेबरैर्घटयितुं दयमानमनाः ।
वरद निजेच्छयैव परवानकरोः प्रकृतिं
महदभिमानभूतकरणावलिकोरकिणीम् ।।' (४१)

हे वरद दयालुहृदयः भवसि । अत एव सिसृक्षारूपनि
परवान् भूत्वा 'प्रजापतिरकामयत प्रजाः सृजयेयेति' क
प्रलयवेलायाम् अचित्सदृशान् संसारिणो जीवान् क
जिह्वाघ्राणत्वङ्मनोभिः ज्ञानेन्द्रियैर्दशभिः वाक्पाणिप
पञ्चभिः कर्मेन्द्रियैः प्रत्येकमेकादशेन्द्रियविशिष्टैः शरी
मूलप्रकृतिं महदहङ्कारतन्मात्राभूतपञ्चकर्मेन्द्रियज्ञाने
पङ्क्तिभिः कलिकावतीमकरोः इति दयाकार्येण इयं प्रकृ
सा प्रकृतिः 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्र
सरूपाम्' इति श्रुत्युक्तानुसारेण सत्त्वरजस्तमोमयीं माया
स्वाधिष्ठितां जगत् सृष्ट्युपकरणभूतां प्रकृतिं
त्रयोविंशतिविकृतिमतीं चकर्थ इतीदं महत्तत्त्वं प्रपञ्चयाम
विषयमधिकृत्य निगमान्तमहादोशिकाः दयाशतके स्तोत्रे स

'अचिदविशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वे
करणकलेबरयोगं वितरसि वृषशैलनाथ करुणे त

इति अचिदवशिष्टान् जन्तूनवलोक्य भगवतः दयैव जातनिर्वेदा करण-कलेबरयोगं वितरति इति श्रीवेङ्कटेशस्य दयाप्रभावमुपावर्णयन् । भगवतः सङ्कल्पाधीनेषु समस्तविषयेषु दयासम्बन्धो भवति इति दयाशतके आचार्यैः सिद्धान्तितम् । परदुःखदुःखित्वं दयेति, परदुःखनिराचिकीर्षा दयेति विविधग्रन्थेषु पूर्वाचार्यैः दयास्वरूपं प्रतिपादितम् । चिदचिता स्वरूपस्थितिप्रवृत्तयः भगवद्दयया संभवन्ति । एवम् अनाघ्रातदुःखानां जीवकोट्यन्तर्भूतानां नित्यसूरिणां स्वरूप-स्थितिप्रवृत्तयोऽपि दयाधीना एव । अस्मिन् विषये परदुःखदुःखित्वं दयेति वचनं नानुकूलं भवेत्। अतः परहितप्रावण्यमेव दयास्वरूपमिति कृत्वा

'परहितमनुकम्पे भावयन्त्यां भवत्यां
स्थिरमनुपधि हार्दं श्रीनिवासो दधानः ।
ललितरुचिषु लक्ष्मीभूमिनीलासु नूनं
प्रथयति बहुमानं त्वत्प्रतिच्छन्दबुद्ध्या ।।'

(दयाशतकम्) इति परहितप्रावण्यं निरूपितवन्तः ।

तदनु श्रीमन्तः कूरेशामिश्रतनूजाः जगत्सृष्टिः कथमुपपद्यत इति भावयन्तः 'निम्नोन्नतं च करुणं च जगद्विचित्रं' इत्यस्मिन् श्लोके हे रङ्गशेषिन् निम्नोन्नतं च ईशेशितव्य वैषम्यवच्च क्षुद्रोगादि क्षुण्णतया दयनीयं च तच्चेतनरचितं विचित्रं पुण्यपापरूपं कर्म विचार्य सृजतः ते वैषम्यनिर्घृणतयोः प्रसक्तिः नास्ति खलु तत् वैषम्यनैर्घुण्येन सापेक्षत्वादिति शारीरकसूत्रसहायाः श्रुतयः 'रमणीयचरणाः रमणीयां योनिमापद्येरन्, कुत्सितां योनि'मित्याद्याः प्रतिपादयन्तीत्यर्थः विचित्रविषयसृष्टे श्चेतनकर्मानुगुणतया, 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः', इति 'सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति' इति सर्वसमत्वस्य 'स एकाकी न रमेत', 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' इत्याद्युक्तायाः परदुःखासहिष्णुतारूपाया दयायाश्च न वैपरित्यमिति सूत्रसहकृता वेदाः प्रतिपादयन्तीप्यभिप्रायमाविश्चक्रुः ।

**भगवतः निरङ्कुशस्वातन्त्र्यविषयः -**

यदि सृष्टेः कर्मपारतन्त्र्यनिबन्धनत्वं स्यात् तर्हि भगवतः निरङ्कुशस्वातन्त्र्यं कथं घटते इत्याशङ्क्य तत्रभवन्तः पराशरार्याः सदृष्टान्तं विवृण्वन्ति स्म । 'स्वाधीने सहकारिकारणगणे स्वातन्त्र्यमेवावहेत्' इति हे श्रीरङ्गनाथ घटादिनिर्मातुः कुलालादेः सहकारिकारणगणे मृत्पिण्डदण्डचक्रादिके तदुपयुक्तसाधननिचये स्वार्जिते सत्यपि तदपेक्षणं यथा स्वातन्त्र्यमेवावहेत्, अथ वा शरीरे स्वाधीनेऽपि भोक्तुः तत्तदनुभवानुकूलशरीरापेक्षणं यथा स्वातन्त्र्यमेवावहेत्, यथा राज्ञः स्वस्यानुवर्तनेषु अपराधविधयः, यथा स्वातन्त्र्यमावहेयुः तत्तदभिमतवस्तुप्रदातुश्च अर्थिजने कटाक्षणमिव तद्वत् स्रष्टुस्ते चेतनानां भाविपूर्वकर्मपरिपाकवैशिष्ट्यरूपावस्थायायाः पर्यालोचनमपि स्वतन्त्रतामेव सम्पादयेत् । 'एष एव साधुकर्म कारयति उन्निनीषति तं यमेभ्यो लोकेभ्यः उन्निनीषति एष एवासाधुकर्म कारयति तं यमथो निनीषति' इति प्रवाहानादितत्तत्प्रातिकूल्यानुकूल्यकल्पनानुकूलतया स्वसङ्कल्पितकर्मसापेक्षं सृष्टिवैचित्र्यं सुतरां स्वतन्त्र्यानुगुणं भवेदिति प्रादर्शयन् ।

**बहुभवनं भगवतः स्ववल्लभाया लक्ष्म्याः हृदयोल्लासायेति विवरणम्**

'अचिदविशेषितानि'ति श्लोके प्रकृतिं महदभिमानभूतकरणावलिकोरकिणीमकरोः इत्यनेन भगवतः प्रकृतिविकारं प्रति निमित्तकारणत्वं मात्रं प्रतीयते । तच्च 'बहु स्यां प्रजायेय' (तै.आ.६) 'यतो वा इमानि भूतानि जायन्ते ।' (तै.भृ.१) 'विष्णोस्सकाशात् उद्भूतं जगत्' (वि.पु.१-१-३१) 'जन्माद्यस्य यतः' (ब्र.सू.१-१-२) 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (ब्र.सू. १-४-२) इत्यादिश्रुतिस्मृतिसूत्रविरुद्धमित्याशङ्कां परिहरन्तः बहुभवनं च सूक्ष्मचिदचिद्विशिष्टस्यैव भगवतः स्ववल्लभाया लक्ष्म्याः हृदयोल्लासायेति सोदाहरणं विवृण्वन्ति स्म।

'प्रलयसमयसुप्तं स्वं शरीरैकदेशं
वरद चिदचदाख्यं स्वेच्छया विस्तृणानः ।

खचितमिव कलापं चित्रमातत्य धून्वन्
अनुशिखिनि शिखीव क्रीडसि श्रीसमक्षम् ।।' (४४)

श्लोकेऽत्र हे वरद प्रलयसमये सुप्तप्रायं चेतनाचेतनात्मकं स्वकीयं शरीरैकदेशं स्वसङ्कल्पेन विस्तृणानः त्वम्, अनुशिखिनि नाम मयूर्याः समीपे चित्रं बर्हं स्वचितमिव विस्तृत्य कम्पयन् मयूरः इव श्रियस्सान्निधाने विहरसि इति उपावर्णयन् । श्लोकोऽयं विशिष्टाद्वैतसिद्धान्तविषयप्रतिपादकः' । 'यस्यात्मा शरीरं, यस्य पृथिवी शरीर'मिति (बृ.का.५-७-२२) भगवच्छरीरभूतयोश्चिदचितोः प्रलयसमये, 'महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देव एकीभवति' (सुबा. २) इत्यादिश्रुत्यानुगुण्येन भगवत्येव लीनत्वात् नामरूपविभागानर्हातिसूक्ष्मचिदचिच्छरीरको भगवानेव 'सोऽकामयत बहु, स्यामि'ति (तै.आ. ६) बहुभवनं सङ्कल्प्य, 'कस्यायुतायुतशतैककालां शशांके विश्वं विचित्रचिदचित्प्रविभागवृत्तम्' (स्तोत्ररत्नम्, १२) इत्युक्तप्रमाणेन स्वशरीरैकदेशमेव स्वकीयप्रेयसीहृदयविकासाय विचित्रजगदाकारेण परिणमयतीति मयूरकलापविकासतुलया फलितम् । भगवत्याः लीलाविलासार्थमेव सृष्टिः इति श्रियःपतेः जगज्जन्मादिकारणत्वमूचुः । श्रीपराशरभट्टार्याः स्वकीये श्रीगुणरत्नकोशेऽपि -

'यद्भ्रूभङ्गाः प्रमाणं स्थिरचररचनातारतम्ये मुरारेः
वेदान्ताः तत्त्वचिन्तां मुराभिदुरसि यत्पादचिह्नैस्तरन्ति।'

(श्लो. ४) इति उद्घाटितवन्तः ।

अथ श्रीपराशरभट्टपादाः 'हर्तुं तमस्सदसती च विवेक्तुमीशो मानं प्रदिपमिव कारुणीको ददाति' इति श्रुतिप्रामाण्यव्यवस्थापनोप-

---

1 अस्य श्लोकस्याद्भुतां व्याख्यां उ. वे. प्र. श्री न. च. रघुनाथाचार्यस्वामिपादाः कोव्वूरु गौडीयमठे श्रीरामानुजजयन्तीसन्दर्भे उपन्यस्तवन्तम्। तेषामुपन्याससारांशोऽत्र सङ्गृहीतः ।

क्रमानुगुण्येन बाह्यकुदृष्टिप्रभृतिदुष्टमतानि निरस्य, श्रुतेः स्वातन्त्र्येण प्रामाण्यं स्मृतिप्रभृतीनां तदुपबृंहणोपयोगं च विस्तरेण प्रतिपाद्य, ततः फलितं सर्वस्मात्परत्वं समस्तजगत्कारणत्वं तदुपयुक्तज्ञानशक्त्यादि-कल्याणगुणगणपरिपूर्णत्वं सङ्कर्षणादिव्यूहकृत्यानि चाभिहितवन्तः । इदानीं श्रीमन्नारायणस्यावतारान् प्रस्तोष्यन्तः धर्मव्यवस्थापनमेवा-वतारप्रयोजनमिति च प्रतिपादयन्ति स्म।

**धर्मव्यवस्थापनमेवावतारप्रयोजनम् -**

'भूयो भूयस्त्वयि हितपरेऽप्युत्पथानात्मनीन-
स्रोतो मग्नानपि पथि नयंस्त्वं दुराशावशेन।
रुग्णे तोके स्व इव जननी तत्कषायं पिबन्ती
तत्तद्वर्णाश्रमविधिवशः क्लिश्यसे रङ्गराज ।।' (४५)

इत्यस्मिन् श्लोके भगवान् श्रीरङ्गनाथः जननीवास्मान् पातीति पराशराः वदन्तः अवतारप्रयोजनमेवं जगदुः । हे रङ्गराज त्वयि भूयो भूयः हितपरेऽपि,

'विचित्रा देहसम्पत्तिरीश्वराय निवेदितुम्।
सन्ति हस्तौ च पादौ च कथं नाराध्यते हरिः ।।'
'वक्तुं समर्थोऽपि न वक्ति कश्चित्
अहो जनानां व्यसनाभिमुख्यम् ।' (मुकुन्दमाला, १७)

इति कुलशेखरदिव्यसूर्युक्तवचनानुगुण्येन - स्वाराधनोपयुक्तकरणकलेबरप्रदानसदसद्विभागसाधनशास्त्रप्रवर्तनादि-रूपजीवसमाजं समुज्जीवन् हेतुभूतहितप्रवर्तके सत्यपि, उल्लङ्घित-शास्त्रवर्त्मनि अत एव दुःखकरनरकावहे दुष्कर्मप्रवाहे मग्नानपि समुत्तारणेच्छापरतन्त्रतया दुराशैव शास्त्रवर्त्मनि नयन् त्वम्, स्वकीये शिशौ रोगग्रस्ते सति तस्य रोगस्य शमनानुकूलं कषायं पिबन्ती जननीव तत्तद्वर्णाश्रमाचारविधिवशस्सन् क्लेशमनुभवसि । यथा -

'यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।।' (भ.गी. ३-२१)
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।

इत्याद्युक्तप्रकारेण भगवतश्शास्त्रीयवर्त्मानुवर्तनक्लेशः उच्छास्त्रप्रवृत्ति-कचेतननियततत्तद्वर्णाश्रमाचारप्रवर्तनार्थं महान्तं कष्टमनुभूयसे इति, यतः

'वर्णाश्रमाचारवता पुरुषेण परः पुंमान् ।

विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ।।' (वि.पु.३-८-९)

इति सर्वत्र वर्णाश्रमाचारनिष्ठैव संसारसमुत्तरणप्रधानसाधनमिति प्रस्तुतत्वात् । हे रङ्गनाथ !भवान् जननीकषायपानं यथा तदीय-स्तन्यपायी शिशुरोग शमनकरं तद्वत् भगवतः शास्त्रीयाचारनिष्ठा तदीयाचारानुवर्तनद्वारा चेतन संसाररोगनिवर्तिका भवति। सा चावतारकालीनैवेति विशेषार्थं प्रत्यपादयन्।

एवमेव हे सार्व रङ्गधाम त्वत्कं सकलचरीतं दुराशापाशेभ्यः जातु मूर्खोत्तराणां जगतां न स्याद्यदि नियमतः निस्तन्द्रालोः तव सर्गस्थेमप्रभृतिषु ऋतुलिङ्गप्रवाहाः सदा जागरा न घटते । जगत्सृष्ट्यादिषु चेष्टितेषु तत्तत्समयानुकूलसंकल्पः शास्त्रानभिज्ञ-जीवसमूहसमुत्तारणदुराशापाशप्रयुक्त इति पर्यवसितमर्थं श्रीपराशराः षट्चत्वारिंशत्तमे श्लोके विवृतवन्तः ।

**भगवतः सर्वभूतसुहृत्त्वविवरणम् -**

अथ श्रीपराशराः श्रीरङ्गेशपुरोहिताः अत्यन्तमूर्खजनरक्षण-प्रवृत्त्युपयुक्तं भगवतः स्वभाव एव सुहृत्त्वमिति प्रतिपादितुमारब्धाः सुहृदिव निगलाद्यैरुन्मदिष्णुं नृशंसं दण्डापूपिकातस्सुहृत्त्वम् इति श्रीरङ्गनाथं विज्ञापयन्ति । उन्मादशीलं निगलादिभिः दण्डयन् सुहृदिव नृशंसं निरयपूर्वैः दण्डयन् सन् रक्षसि । पापक्षयकरनरकप्रक्षेपरूपं शिक्षणमपि रक्षणप्रकारभेदपक्षनिक्षिप्तमिति भावः । तदितर अनृशंसमपि नरकक्लेशात् त्रायसे । परहिंसामात्रानिवृत्तमपि पुरुषं स्वर्गं प्रापयसि । एतादृशं भवतः सर्वभूतसुहृत्वं दण्डापूपिकान्यायात् सिद्धम् अपूपपाकसाधनभूतदण्डोऽपि मूषिकेण भक्षित इत्युक्ते यथापूपभक्षणं किमुत वक्तव्यम् इति सिद्ध्यति, तथा नृशंसोऽपि स्नैहार्देन रक्षित इत्युक्ते भगवतः श्रीरङ्गमन्दिरस्य सर्वभूतसुहृत्त्वं कैमुतिकन्यायसिद्धम्

इति विवृतवन्तः । 'सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति' इति गीताशास्त्रवचनमत्र स्मरणीयं भवति ।

विभवावतारप्रतिपादनम् -

अथ कूरेशनन्दनाः भगवतः श्रीरङ्गनाथस्य परव्यूहवैभवं प्रतिपाद्य, विभवावतारविषये स्वकीये श्रीरङ्गराजस्तवे षड्विंशति-संख्याकान् श्लोकान् रचयामासुः । तत्रायं प्रथमः श्लोकः

'धृतिनियमनरक्षावीक्षणैश्शास्त्रदान-
प्रभृतिभिरचिकित्स्यान्प्राणिनः प्रेक्ष्य भूयः ।
सुरनरतिरश्चां सर्वथा तुल्यधर्मा
त्वमवतरसि देवोऽजोऽपि सन्नव्ययात्मा ।।' (४८)

'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः ।'[5] (बृ.५-८-९) 'अन्तःप्रविष्ठश्शास्ता जनानां सर्वात्मा', (यजुरा. ३-२४) 'य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति।' (बृ.का.५-७-२२) इत्युक्तधारणनियमनरक्षणानुगुणसङ्कल्पैःशास्त्रप्रदानप्रभृतिभिः हिरण्य-गर्भमन्वादिमुखेन श्रुतिस्मृत्यादिप्रदानमुखैरुपकारैश्च एवमेव मैत्रेय-पराशरादिमुखेन शिष्याचार्यनिष्ठानुष्ठानादि गृह्यते, शिक्षितुमशक्यान् प्राणिनः प्रेक्ष्य पुनरपि अजोऽव्ययात्मापि सन् त्वं लीलया सुरमनुजतिरश्चां तुल्यधर्मा विष्णूपेन्द्ररामकृष्णमत्स्यकूर्मवराहनरसिंह-हंसहयग्रीवरूपेणावताराः धृतिनियमनरक्षावीक्षणशास्त्रदानाद्यचिकित्स्य-कृत्स्नप्रजापरिपालनायेति वदन्तः,

'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ।।
यदा यदा हि धर्मस्य ग्लनिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।।
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ।।' (भ.गी.४-६,७,८)

इत्यादिगीताशास्त्रप्रमाणानि स्वीकृतवन्तः ।

श्रीमन्तो वेङ्कटनाथार्या अपि अवतारविषये स्वकीये दयाशतके एकाशीतितमे श्लोके -

'कृपे विगतवेलया कृतसमग्रपोषैस्त्वया
कलिज्वलनदुर्गते जगति कालमेघायितम् ।
वृषक्षितिधरासु स्थितपदेषु सानुप्लवैः
वृषाद्रिपतिविग्रहैर्व्यपगताखिलावग्रहैः ।।

(दयाशतकम्, ८१)

इति परमपुरुषः कारुण्यनीरभारमोढुमसहमानः परमपदात् अवतीर्य वर्षतीति आश्रितसंरक्षणाय भगवान् स्वयमेव स्वदिव्यमहिषीभिः नित्यसूरिभिश्च कलिज्वलनदुर्गते जगति कालमेघ इवानुगृह्णाति इति पराशराभिप्रायमनुसरन्तः प्रणमन्ति स्म । अस्मिन् विषये श्रीमतां कूरेशमिश्राणां श्रीवैकुण्ठस्तवश्रीसूक्तय अपि अनुसन्धेया भवन्ति।

'पापैरनादिभवसम्भववासनोत्थैः
दुःखेषु यः खलु मिमङ्क्षति हन्त जन्तुः ।
तं केवलं तु कृपयैव समुद्धरिष्यं-
स्तद्दुष्कृतस्य ननु निष्कृतिमात्थ शास्त्रैः ।।'
'शास्त्रैरनादिनिधनैस्स्मृतिभिस्त्वदीय-
दिव्यावतारचरितैः शुभया च दृष्ट्या ।
निःश्रेयसं यदुपकल्पयसि प्रजानां
सा त्वत्कृपाजलधितल्लजवल्गितश्रीः ।।' (श्रीवै.स्त. ५९,६०)

भगवतः अवतारेषु यथाश्रितसंरक्षणं, दुष्टशिक्षणं, धर्मसंस्थापनं-मितिकृत्यानि भवन्ति, तद्वत् प्रत्यवतारम् इन्दिरासंश्लेष एवात्यन्तं समाश्रितजनपालनलीलानुकूलमित्यपि भवतीति परमाद्भुतं वदन्ति।

अनुजनुरनुरूपरूपचेष्टा

'न यदि समागममिन्दिरा करिष्यत्
असरसमथ वा प्रियम्भविष्णु ।
ध्रुवमकरिष्यत रङ्गराज नर्म। (४९)

भगवतः प्रत्यवतारे महालक्ष्मीः

'देवत्वे देववदेवीयं मनुष्यत्वे च मानुषी ।
विष्णोर्देहानुरूपं वै करोत्येषात्मनस्तनुम्।।'
'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मानि ।
अन्येष्वप्यवतारेषु विष्णोरेषानपायिनी ।।' (वि.पु. १-

इत्युक्तप्रकारेण भगवत्परिगृहीतसुरनरादिविग्रहानुरूपविग्रहविल
सती संश्लोषं नाकरिष्यद्यादि रङ्गराजनर्म अ
रङ्गनाथक्रीडितं जगन्नाटकं च रसरहितं भवेद्येव । अथ वा अ
च कृतमभविष्यदिति प्रतिपादयन्ति स्म। अमुमेवार्थं श्रीपराशरा
श्रीगुणरत्नकोशे -

'यदि मनुजतिरश्चां लीलया तुल्यवृत्तेः
अनुजनुरनुरूपा देवि नावातरिष्यः ।
असरसमभविष्यन्नर्म नाथस्य मातः
दरदलदरविन्दोदन्तकान्तायताक्षि ।' (४८)

भगवत्याः संश्लेषाभावे नारायणस्य नर्म असरसमभाविष्यदिति
अत एव 'विष्णोरेषानपायिनी' इति श्रीमहालक्ष्मीं स्तु
श्रीभाष्यकाराः रामानुजार्याः अपि शरणागतिगद्यप्रबन्धे 'भग
देवीं नित्यानपायिनीं निरवद्यां देवदेवदिव्यमहिषीमखिलजग
इति शरणं प्रपद्यन्ते स्म।

भगवतः अवताररहस्यज्ञानमज्ञानानामतिदुर्लभमिति कथनम् -

'गरीयस्त्वं परिजानन्ति धीराः' इत्यस्मिन् श्लोके हे
ज्ञानिन एव गरीयस्त्वं जानान्ति। मूढाः मनुजत्वादि
भावमजानन्तः अवजानान्ति ते जन्मकर्मप्रमाणानि स्मरन्ते '। य

'अवजानन्ति मां मूढाः मानुषीं तनुमश्रितम् ।
परं भावमजानन्तो मामव्ययमनुत्तमम् ।।' (भ.गी. ९-

इति,

"जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ।।(भ.गी

इति 'द्विषन्ति मन्दाश्चरितं महात्मनाम्' इति कालिदासवचन
शक्यते।

**विष्ण्वाख्यप्रथमावतारप्रभावः -**

श्रीपराशराः भगवन्नारायणस्य विष्ण्वाख्यप्रथमा
वर्णयन्ति स्म। 'मध्येविरिञ्चिगिरिशं प्रथमावतारः' इति स
रङ्गचन्द्र मध्येविरिञ्चिगिरिशं प्रथमावतारः तव स्वरूपं स्थ
परत्वपिशुनैः सत्त्वप्रवर्तनकृपापरिपालनाद्यैः तव किं प्र
परिप्रश्नन्ति । 'महान् प्रभुः वै पुरुषस्सत्त्वस्यैव प्रवर्त
श्रुत्युक्तविष्णोः सत्त्वप्रवर्तनम् 'वेदाहमेतं पुरुषं महान्तम्' इ
सूक्तोक्तं महापुरुषत्वसूचकं ज्ञायते । एवमेव 'यो ब्रह्माणं वि
यो वै वेदांश्च प्रहिणोति तस्मै', (श्वे.६-१८) 'इमं विव
प्रोक्तवानहमव्ययम्' (भ.गी. ४-१) इत्युक्तवेदोपदेशः योगोपदे
सत्त्वप्रवर्तनशब्दाभिधेयौ भवतः खलु कृपाकार्यं परिपालनं च
परदुःखासहिष्णुता हि कृपा । वेदापहारगुरुपातकदै
पद्विमोचनमहिष्टफलप्रदानैः परिपालनत्वं सूचितम् ।
परिपालनानुकूललीलाः गृह्यन्ते । इत्थं ब्रह्मरुद्राद्यापद्विमोचक
नारायणस्य विष्णोः स्वरूपगोपनमशक्यमिति वदन्ति ।
महाविष्णोः प्रभावः वाचामगोचर इति

'यत्तत्त्वमक्षरमदृश्यमगोत्रवर्ण-
मग्राह्यमव्ययमनीदृशमद्वितीयम् ।
ईशानमस्य जगतो यदणोरणीय-
स्तद्वैष्णवं पदमुदारमुदाहरामः ।।' (श्रीवै. ६) इति
'सूक्तं तु पौरुषमशेषजगत्पवित्रं
त्वामुत्तमं पुरुषमीशमुदाजहार ।' (श्रीवै. २४)

इति श्रीकुरेशमिश्राः बहुधा बहुभिः प्रमाणसहस्रैः स्वकीय
निगदितवन्तः। तदनु श्रीपराशराः वेदप्रदानार्थानवतारान् प्रण
तत्रोदाहरणभूतयोः प्रथमश्लोकः श्रीहयग्रीवावताररूपः ।

'मधुकैटभश्चेति विरोधं विधूय

त्रयी दिव्यचक्षुर्विधातुर्विधाय ।
स्मरस्यङ्गरङ्गि स्तुरङ्गावतारः
समस्तं जगज्जीवयस्यकस्मात् ।।'

इत्यस्मिन् श्लोके हयग्रीवावतरमहिमानं स्तुवन्ति । हे रङ्ग मधुकैटभाख्यौ दैत्यौ निहत्य विधातुः त्रयी दिव्यचक्षुर्विधाय, निर्हेतुककृपया समस्तजगज्जीवयिष्यसि । एतदद्भुतावहं कर्म स्मरसि किमिति प्रणमेमुः । वेदप्रदानमात्रं हि हयग्रीवावतारकार्यम् । मधुकैटभनिरसनन्तु तदनुगुणविग्रहान्तरपरिग्रहकृत्यमिति पुराणेषु प्रसिद्धम् । श्रीमन्महाभारते शान्तिपर्वणि ३६५ अध्याये विषयोऽयं प्रस्तावितः । तद्यथा -

'ततो हृतेषु वेदेषु ब्रह्मणः कश्मलोऽविशत् ।
ततो वचनमीशानं प्राह वेदैर्विना कृतः ।।
वेदा मे परमं चक्षुः वेदा मे परमं धनम् ।
वेदा मे परमं धाम वेदा मे ब्रह्म चोत्तमम् ।।
ततो वेदा हृतास्सर्वे दानवाभ्यां बलार्दिताः ।
अन्धकारा इमे जातः लोका वेदैर्विवर्जिताः ।।
वेदादृते हि किं कुर्यां लोकान्वै स्त्रष्टुमुद्यतः ।
अहो बत महद्दुःखम् वेदनाशनजं मम ।।
प्राप्तं धुनोति हृदयं मान्तु शोकदुरासदम् ।
जग्राह वेदानखिलान् रसातलगतान् हरिः ।।
प्रादाच्च ब्रह्मणो राजन् ततस्स्वां प्रकृतिं ययौ ।
ततस्तयोर्वधेनीशुवेदापहरणेन च ।
शोकापनयनं चक्रे ब्रह्मणः पुरुषोत्तमः ।।' इति

'मन्दोऽभविष्यन्निमतं विरिञ्चो
वाचां निधे वञ्चिछतभागधेयः ।
दैत्यापनीतान् दययैव भूयो-
प्यध्यापयिष्यो निगमान्न चेत्तम् ।।'

(श्रीहयग्रीवस्तोत्रम्, ८) इति ।

वेदान्ताचार्याः इमां पौराणिकीं गाथां श्रीहयग्रीवस्तोत्रे महाप्रभावसम्पन्ने स्तोत्रयामासुः । श्रीहंसावतारतत्त्वं प्रतिपादयितुकामाः श्रीकूरेशनन्दनाः हे रङ्गनिधे भवान् इन्दुरिवोद्यन् तिमिरघस्मरशीतस्वच्छहंसतनुः ज्ञानयज्ञसुधयैव समृध्यन् वेदभाभिः आर्तानानुजग्रिहिथ इति भगवन्तं रङ्गनाथं भक्त्या प्रणेमुः । हंसावतारस्त्वं श्रुत्यपहृत्यार्तं चतुर्मुखमज्ञानतमोनिवर्तकश्रुतिमयप्रकाशप्रदानेन प्रसन्नमनस्कमकार्षीः इति ज्ञापयन्ति। हंसावतारविषये वेदान्ताचार्याः दयाशतके एवं वर्णयामासुः - भगवतः श्रीनिवासस्य दया, गङ्गासाम्यमुपैति इति वर्णयन्तः,

'निगमसमाश्रिता निखिललोकसमृद्धिकरी-
भजदघकूलमुद्रजगतिः परितप्तहिता ।
प्रकटितहंसमत्स्यकमठाद्यवतारशता
विबुधसरिच्छ्रियं वृषगिरीश दये वहसि।।'(दयाशतकम्, ५५)

हंसावतारश्रीपाञ्चरात्रागमादिषु निगदितः । यथा हयग्रीवावतारेण भगवान् वेदोद्धारमकरोत्, तद्वत् केषुचित्पुराणेषु हंसावतारेण वेदरक्षणं चतुर्मुखब्रह्मणे वेदप्रदानं चोपवर्णितमिति व्याख्याकाराः सूचयन्ति।

अथ श्रीपराशराः वटदलशायिनं स्तुवन्ति । यद्यपि वटदलशायी श्रीकृष्ण एव तथापि प्रलयकाले वटदलमधिशय्य विराजमानं श्रीकृष्णमूर्तिनं प्रार्थयन्ति ।

'वटदलमधिशय्य रङ्गधामन् शयित इवार्णवतर्णकः पादाब्जम् ।
आधिमुखमुदरे जगन्ति मातुन्निदधिथ वैष्णवभोग्यलिप्सया वा ।।'

अत्र भगवान् बालमुकुन्दः समुद्रवत्स इव वटदले शयित्वा उदरे विद्यमानानि भुवनानि मातुं स्वपदाब्जमधिमुखं निहितवान् । वैष्णवभोगलिप्सया वा नाम स्वकीयपादाम्बुजस्य श्रीवैष्णवाभोग्यतया तन्ममापि भोग्यमितीच्छया वा पादाब्जमधिमुखं निहितवांनासीः स्तुवन्ति।

श्लोकममुं श्रवणमात्रेण -

'करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ।।'

इति श्लोकः (मार्कण्डेयकृतं स्तोत्रम्) भक्तहृदन्तरालेषु स्फुरत्येव।।

**भगवतः क्षीरसागरमथनार्थमवतारस्तवः -**

अथ पराशरभट्टार्याः

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।

अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।।'

इति गीताशास्त्रोक्तरीत्या भगवान् श्रीमन्नारायणः अवतारान् स्वीकृत्य धर्मस्थापनं लक्ष्म्याः लाभं च प्राप्तवान् इति पूर्वमेवावोचन् । तदनु सारमिदानीं क्षीरसागरमथनार्थं भगवान् अवततारेति

'उन्मूल्याहरमन्दराद्रिमहिना तं संबधानामुना ...

कुर्वाणस्य फलेग्रहिर्हि कमलालाभेन सर्वश्रमः ।।'

इति बहुधा प्रार्थयामसुः । हे श्रीरङ्गेश्वरं मन्दराद्रिम् उन्मूल्य आहर। अमुनाहिना मन्दराद्रिं संबधान । चञ्चलमालिकैः दोर्भिरम्बुधिं दधिनिर्माथं मथान । चक्रकौस्तुभसुधापूर्वं ग्रहाण इति कुर्वाणस्य ते सर्वश्रमः कमलालाभेन फलेग्रहिः हि इति कमलालाभाय श्री हरेः श्रमः इति उपावर्णयन् ।

अत्राहर सम्बधान मथान गृहाण क्रियासमभिहारे 'लोट् समुच्चयेऽन्यतरस्यामिति' 'भूतार्थे लोट्' इति व्याकरणप्रयोगाः वैयाकरणानां पुत्रोत्साहानन्दमुत्पाद्यन्ते । 'पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामरङ्गनाः' इति माघकवेः प्रसिद्धश्लोकः स्मार्यते ।

**गजेन्द्रापन्निवर्तनार्थमवतीर्णावतारस्तवः -**

भगवतः श्रीमन्नारायणावतारेषु गजेन्द्रापन्निवर्तनावतारः महोत्कृष्टं स्थानं भजते । श्री मद्भागवते गजेन्द्रार्तिहरस्य नारायणस्य महिमा बहुधा श्लाघिता। तद्वृत्तान्तं मनसि निधाय श्रीमन्तः पराशर भट्टार्याः —

'देवीहस्ताम्बुजेभ्यश्चरणकिसलये संवहद्भ्योऽपहृत्य

प्रत्यस्यानन्तभोगं झटिति चलपुटे चक्षुषी विस्तृणानः ।

आक्षिप्योरश्च लक्ष्म्या स्तनकलशकनत्कुङ्कुमस्तोमपङ्कात्

देव श्रीरङ्गधामा गजपतिघुषिते व्याकुलस्तात्पुरो नः ।।'
(५६) इति श्लोके श्रीरङ्गधामा देवः कथं व्याकुलोऽभूदिति रमणीयचित्रणमकार्षुः । अत्र इमे भागवतश्लोकाः श्रीपराशराणां प्रेरका अभवन् –

'आत्मयत्ने प्रतिहते कृत्याकृत्य विमूढधीः
परमापदमापन्नो मनसा चिन्तयद्धरिम् ।
स तु नागवरः श्रीमान् नारायणपरायणः ।'

इति । समाश्रितार्तनादश्रवणासहमहाकारुण्यपूर्णसन्निधानमेवास्माकमावश्यकमिति प्रार्थयन्ति । अथ भगवतो नारायणस्य व्याकुलीमूलां त्वरां प्रणमन्ति । अयं च श्लोकः श्रीवैष्णवसंप्रदायैः रसघनरूपेण कृत्वा वारं वारं गोष्ठीसु व्याख्यायते।

'अतन्त्रितचमूपतिप्रहितहस्तमस्वीकृत
प्रणीतमणिपादुकं किमिति चाकुलान्तःपुरम् ।
अवाहनपरिष्क्रियं पतगराजमारोहतः
करिप्रवरबृम्हिते भगवतस्त्वारयै नमः ।।'(५६)

इति श्लोके भगवतः प्रणतार्तिहरत्वरा नमस्यते । श्रीगजेन्द्रे गर्जिते सति, कासारतीरगमनत्वरातिशयेन सविनयप्रणयप्रकर्षविष्वक्सेनसमर्पितं हस्तमप्यनवलम्ब्य अन्तःपुरान्तरङ्गपरिजनसमर्पिते मणिपादुके अस्वीकृत्य किमर्थमिदं व्याकुलत्वमिति सावरोधजने व्याकुलीभूते वाहनारोहणानुगुणान्तरणादिरहितं पक्षिराजम् आरोहतो भगवतः त्वरायै नमः इति त्वरां नमस्यन्ति । अहो श्रीपराशराणां भावगाम्भीर्यम् । अनेन ज्ञायते यत् समाश्रितार्तध्वनिश्रवणसम्भ्रान्तस्वान्तस्य लक्ष्मीकान्तस्य तद्रक्षणानुगुणा त्वरैवाशरण्यशरण्येति निर्णीतमिति सम्प्रदायः । पुनः अष्टपञ्चाशत्तमे श्लोके त्वरायाः पराकाष्टां प्रदर्शयन्ति ।

'यं पश्यन्विश्वधुर्या - - - कान्दिशीकी दशा ते' इति ।

हे श्रीरङ्गबन्धो देव यं तार्क्ष्यं पश्यन् अधो असकृत् विश्वधुर्यां धियं मन्दरां मन्यमानः तं हुङ्कारास्फालन अंघ्रिप्रहतिभिरपि अध्यक्षिपः । गजपते बृम्हिते जृम्भमाणे किञ्च उदञ्चन् उदस्थाः । प्रणमति जने ते

दशा कान्दिशीकी इति अत्यन्तार्तशरणागतरक्षणत्वरावस्था, भयद्रुतावस्था सदृशी खलु इति आश्चर्यं प्रकटयन्ति ।

अत्र गजेन्द्रार्तिप्रशमनविधौ सम्प्रदायश्लोकौ प्रातरनुसन्धेयौ भवतः —

'ग्राहग्रस्ते गजेन्द्रे रुदति सरभसं तार्क्ष्यमारुह्य धावन्
व्याघूर्णन् माल्यभूषावसनपरिकरो मेघगम्भीरघोषः ।
आबिभ्राणो रथाङ्गं शरमसिमभयं शङ्खचापौ सखेटौ
हस्तैः कौमोदकीमप्यवतु हरिरसावंहसां संहतेर्नः ।।'

इति,

'नक्राक्रान्ते गजेन्द्रे मुकुलितनयने मूलमूलेति खिन्ने
नाहं नाहं न चाहं न च भवति पुनस्तादृशो मादृशेषु ।
इत्येवं त्यक्तहस्ते सपदि सुरगणे भावशून्ये समस्ते
मूलं यः प्रादुरासीत् स दिशतु भगवान् मङ्गलं सन्ततं नः ।।'

पोतनार्यरचिते आन्ध्रमहाभागवतेऽपि गजेन्द्रमोक्षणम् भगवतः त्वरातिशयः बहुरमणीयतया उपवर्णितम् । इत्थं त्वराविशिष्टतया स्वाश्रितार्तिनिवर्तनप्रसक्त एव त्वमिदानीं रङ्गनायको भूत्वास्माकं शरणं भवसीति वदन्ति। श्रीरङ्गेशय गजेन्द्रगर्जनसमनन्तरमित्थं विलम्बितप्रवृत्तिकं मां सज्जनो निन्देदिति मत्वा गमनत्वरया व्यत्यस्तविन्यासं स्रग्भूषाम्बरं दधानः वातसमूहेनातीव चलतः पद्माकरस्य ताण्डवेन त्वमागतोसि । एवं भूतस्त्वमिदानीं शरणान्तररहितस्य ममापि शरणं भवसीति श्रीपराशराः देवाधिदेवं कुलदैवतं श्रीरङ्गनाथं शरणमभजन् । श्रीरङ्गनाथः अर्चावतारेषु प्रथमः, आपान्नार्तिशमनदीक्षादक्षः भवति । तमेव सर्वधा शरणं भजन्त्विति चोपादिशन्।

**दशावतारस्तवः -**

श्रीवैष्णवकथासु पुराणेषु च भगवतः महाविष्णोः दिव्यावताराः वर्ण्यन्ते। तत्रापि दशावतारस्तेत्रं नितरां प्राधान्यं भजते । मत्स्य-कूर्म-वराह-नारासिंह-वामन(कल्कि)पुराणानि दशावताराणां नाम्ना प्रसिद्धिमुपगतानि, अष्टादशपुराणेषु गीयन्ते। विष्णुपुराणं तावत् श्रीमहाविष्णोः

सर्वातिशायित्वं जगज्जन्मस्थेमभङ्गादिलीलां च विशदीकारोति । विष्णुपुराणविषये तत्कर्तारं पराशरऋषिं श्रीवैष्णवसम्प्रदायरताः कृतज्ञतापूर्वकं स्मरन्ते । श्रीमन्तः पराशरमहर्षयः भक्तियोगं सम्यक् प्रकाशयामास । यतो हि व्यासादयः भारतादिग्रन्थेषु धर्मविषये महतीं श्रद्धां प्रादर्शयन् । तत्त्वत्रयविषये न स्पष्टमुदीरयामासुः । भगवान् पराशरमहर्षिः विष्णुपुराणे तत्त्वत्रयज्ञानम्, एवं भगवतः नारायणस्यैव जगज्जन्मादिकारणत्वं च स्थापयामासुः । अत एव परमाचार्याः यामुनदेशिकाः पराशरमहर्षिविषये महान्तं भक्तिं प्रकटयामासुः । यथा स्वकीये स्तोत्ररत्ने –

‘तत्त्वेन यश्चिदचिदीश्वरतत्स्वभाव-
भोगापवर्गतदुपायगतीरुदारः ।
सन्दर्शयन्निरमिमीत पुराणरत्नं
तस्मै नमो मुनिवराय पराशराय ।।’

(श्लो ४) इति कृतज्ञतापूर्वकम् प्रणमेमुः । अत्रविषये

‘आत्मा शुद्धोऽक्षरश्शान्तः निर्गुणः प्रकृतेः परः ।
प्रवृद्ध्यपचयेनास्य एकस्याखिलंजन्तुषु ।।’

इत्यपि च भगवान् पराशरमहर्षिः उपवर्णितवान् । एवमेव

‘परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स देवेषु वेदान्तेषु च गीयते ।।
परः पराणां परमः परात्मा आत्मसंस्थितः ।
रूपवर्गादिनिर्देशविशेषणविवर्जितः ।।
सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते।।’

इत्यादिविष्णुपुराणश्लोकैः महाविष्णोः महिमानमवताररहस्यं चानुगृहीतवान् ।वेदभागेषु कुत्रचित् नारायणसूक्तादिषु अवतारस्तोत्रं परिदृश्यते ।

१. नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् । (कृष्णावतारसूचकम् ।

२. इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।
समूढमस्य पांसुरे त्रीणि पदा विचक्रमे विष्णुर्गोपाधाभ्यः ।
ततो धर्मणि धारयन् । (वामनावतारसूचकम्)
३. दाशरथाय विद्महे सीतावल्लभाय धीमहि।
तन्नो रामचन्द्र प्रचोदयात्। (श्री रामावतारसूचकं)
४. वज्रनखाय विद्महे तीक्षणदंष्ट्राय धीमहि ।
तन्नो नारसिंह प्रचोदयात् (नारसिंहावतारसूचकम्)
उद्धृतासि वराहेण कृष्णेन शतबाहुना (श्रीवराहवतारसूचकेन)

महाविष्णोः दशावतारविशेषान् महर्षयः अद्राक्षुः । द्राविडवेदेऽपि श्रीमहाविष्णोः दशावतारस्तोत्रगाथाः असंख्याकाः रमणीयतया दिव्यसूरिभिः प्रकाशिताः । यथामति अनुभवामः । श्रीभूतयोगी (पूदत्ताळ्वार) नाम दिव्यसूरी स्वकीये इयर्पा इरन्डान्तिरुवन्दादिग्रन्थे भगवतः श्रीमन्नारायणस्य दशावतारान् उपवर्णितवन्तः। प्रायशः सर्वेऽपि दिव्यसूरयः वामनावतारसौलभ्यं कृष्णावतारश्रीरामावतारविशेषांश्च बहुधा कीर्तयन्ति। (पूदत्ताळ्वार्) भूतयोगी तु

'कडलेडुत्तु वायुमडित्तु कण् शुळु न्दु मात्ताल्
अडलेडुत्तु शिन्दैयर युञ्जतडलेडुत्त
पोराडि येन्दिनान् पोन् मलरच्चेवडिये
ओराडि नेञ्जे युकन्दु।' (इयर्पा, ७)

भगवान् नारायणः वामनो भूत्वा त्रीणि पदमितानि भूदानानि स्वीकृत्य झटिति विश्वरूपं प्रदर्श्य, द्वाभ्यामेव पदाभ्यां समस्तं विश्वं स्वीकृत्य, बलिपुत्रादीन् नमुचिनामकानपि निरस्य संग्रामकाले ज्वालावली-विलसितं श्रीसुदर्शनं चक्रायुधं स्वीचकार। हे मनः तस्य चरणारविन्दं शरणं भजेति प्राबोधयन्।

'तिरन्ददु वेञ्चमत्तु त्तेर कडवि अन्नु
पिरन्दतु शीतयै मान्पिन् पोय् पुरिन्दतुवुम्
कण्पळ्ळिकोळ्ळ अळकियते नाकत्तिन्
तण् पळ्ळि कोळ्वान्दनक्कु ।'

श्रीकृष्णावतारे पार्थसारथिर्भूत्वा, श्रीरामावतारे मृगमनुविध्य, सीतावियोगं चानुभूय, काननेषु भूशय्यामधिष्ठाय, नानाविधक्लेशान् सहते स्म। अम्हो शेषशानिनः एतदनुचितं किलेति परितप्तहृदयाः बभूवुः ।

'वराहत्तणियुरुवन् पातम् पणियुमवरकण्डीर
मणियुरूवम् काण्वार मकिळिन्दु ।'

ये च धन्याः भगवन्तमादिवराहं महोपकारकमिति तच्चरण-शरणवरणसमय एव सुप्रभातमिति परिमलपुष्पैः समर्चयेयुः, तदानीमेव श्रीवराहसाक्षात्कारं प्रपद्यन्ते इति प्रार्थयामासुः।

'इळैप्परिय वायवने यातवने येन्नवने यार
मुकप्पुम् यायवने यन्नै मतित्तु ।' (इयर्पा, ५०)

सौलभ्यादिगुणाः नितरां प्रकटीकृताः । अतः भगवतः अभिप्रायेऽपि परत्वसूचकनाराय्णनाम्नोऽपि सौलभ्यसूचकगोपालयादवादिनामानि वरिष्ठानि कीर्तयन्ति स्म । अहमपि तन्नाम्नाह्वयामिति प्रार्थितवन्तः । इत्थं दशावतारसौलभ्यगुणान् कीर्तितवन्तः । श्रीसरोयोगी तु (पौयगै आल्वार) मुदल्तिरुवन्दादिप्रवन्धे।

'पेत्तार्तळै कडल पेरन्दोर्कुरळुकवाय्
शेत्तार्पाडि कडन्द शेण्गम्पाल् नत्ता
मरैमलर्शेवडियै वानवर्कैकूप्पि
निरैमलर्कोण्डेत्तु वराल् नित्रु ।'

अयं भगवान् क्षीरार्णवं विसृज्य देवकीनन्दनोऽभवत् पित्रोः बन्धनानि च दुरीकज़ृत्य, वामनावतारे च बलिं शिक्षयित्वा जगदरक्षयत् । तं पुण्डरीकाक्षं धन्याः देवा पुष्पादिभिः समर्चयन्ति । तत्सौभाग्यं मे नास्ति खलु इति विलपन्ति।

'पुरियोरूकै पत्ति योर्पोन्नालि येन्दि
अरि युरुवुमालुरुवुमागी।' (इयर्पा, ३१)

इत्यस्यां गाथायां प्रह्लादरक्षकं वात्सल्यभूयिष्ठं शङ्खचक्रादिचिह्नितं श्रीनारसिंहं प्रणमेमुः । एवं -

'अरवमडल्वेद मान्कुरून्दम्पुळ्वायु

कुरवैकुडमुलैमर्कुन्नम् ।'

इत्यस्यां गाथायां भगवन्तं यशोदाडिम्भकः कालियभञ्जक इति कुवलयापीडसंहर्तेति गोपालक इति उत्तालतलाभेत्तेति बकासुरहन्तेति स्तुवन्तः, तस्य रासक्रीडां भाण्डनृत्यं पूतनाजीवितहरणवृत्तान्तं मुष्ठिकासुरचाणूरमल्लयुद्धविशारदत्वं गोवर्धनाचलोद्धरणत्वम् अनुभवन्तः गात्रैः सरोमोद्गमाः भवन्ति स्म।

अथ पेरुमालतिरुमोळिनामके श्रीकुलशेखरसूरिप्रबन्धे सप्तमदशके आलैनीरकुरुम्बु दशके कुलशेखरदिव्यसूरिः जननीभावं प्रापय्य यशोदायाः श्रीकृष्णबाल्यचेष्टाविकसितभागधेयायाः वैभवं दृष्ट्वा तदनन्तरकाले श्रीकृष्णं दर्शितवत्याः श्रीकृष्णबाल्यचेष्टानुभव-पुण्यहीनायाः देवक्याः मानसिकीं वेदनां स्वयमनुभवन्ति स्म । तद्यथा

'मुळुदुम् वेण्णेयलैन्दुतोट्टुण्णुम् मुगिळिळञ्चिरुत्तामरैकै
तोळुकैयुमिवैकण्डवशोदै तोल्लैयिन्बत्तिरुदिकण्डाले।'
(पेरुमाळ् तिरूमोळि)

इत्थं श्रीकृष्णबाल्यचेष्टां द्राविड्यामनुभवन्तं कुलशेखरदिव्यसूरिणं स्मरन्तः श्रीमन्तः वेदान्ताचार्याः गोपालविंशत्यां -

'हर्तुं कुम्भे विनिहतकरस्स्वादुहय्यङ्गवीनं
दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् ।
पायादीषत् प्रचलितपदो नापगच्छम् न तिष्ठन्
मिथ्यागोपस्सपदि नयने मीलयन् विश्वगोप्ता ।।'. (५)

इति अन्वभवन्। एवं द्रामिडीं ब्रह्मसंहितां परमया कृपया अनुगृहीत-दिव्यावताराः शठकोपदिव्यसूरिवर्याः सामवेदामृते तिरुवाय्मोलिप्रबन्धे भगवान् श्रियःपतिः सर्वेष्वपि दिव्यावतारेषु सुदर्शनादिदिव्यायुधान् बिभर्तीति।

'शङ्गुंशक्करम् आङ्कैयल् कोण्डान्
एङ्गुम् तानाय् नङ्गल् नादने।।' (१-८-९)

भगवान् श्रीकृष्णः एव मोक्षप्रदः अवाङ्मानसगोचरसमस्तकल्याण-गुणाम्बुराशिः स एव सर्वात्मना रक्षकः इति कृष्णावतारतत्त्वं जगुः ।

'तिण्णन् वीङ्गमुदल् मुडुदुमाय्
एण्णिन् मेदिय नेम्पेरुमान्
मण्णुम् विण्णुमेल्लामुडनुण्डन
ङ्कण्ण्न् कण्णाल्लदिल्लैयोर कण्डे ।' (२-२-१)

एवं प्रपन्नजनकूटस्थाः तिरुवेङ्गटमुडयान् तिरुमलश्रीनिवासविषये अद्भुताद्भुतरूपेण ओडिविल् कालमेल्लाम् इति दशकमनुजग्रुः । तत्र भगवान् श्रीकृष्णः गोवर्धनगिरिधारीति गोगोपरक्षक इति महाबलेः गर्वमुच्छिद्य भूमिं मापितवान् इति महोपकारक इति प्रीत्या श्रीवेङ्कटाचलक्षेत्रे स मया सह मोदत इति स वेङ्कटाचल एवाश्रयणीयः इति पापसंहरणे स एवाचल एवालम् इति प्रार्थितवन्तः । यथा –

'कुन्नमेन्दि कुळिरर्मलै कात्तवन्
अन्नु ज्ञालमळन्दपिरान् परन्
शेन्नुशेर तिरुवेङ्कडमामलै
ओन्नुमेतोळ नम् विनै योयुमे।' (तिरुवाय्मोळि, ३-३-८)

एवं दशावतारविषये -

'आलियेल शङ्गुम् विल्लमेल तिशै
वाळियेळत्तण्डुम् वालुमेल ।' (७-४-१)

त्रिविक्रमावतारविषयम् आदिकूर्मावतारविषयं वाराहवतारसामर्थ्यं महाभारतयुद्धकाले श्रीकृष्णेन प्रदर्शितदिव्यावतारचेष्टितं नृसिंहावतारपराक्रमं श्रीरामावतारपराक्रमं बहुधा वर्णयामासुः । एवं गोदादेव्या विरचिततिरुप्पावैमहाप्रबन्धे - 'ओङ्गि उलहलन्द उत्तमन् पेर्पाडि' इति वामनावतारमहिमा 'मारिमलैमडैन्रिल्' इत्यस्यां गाथायां नृसिंहावतारस्तुतिः, अन्नु 'इव्वुलगमलन्दाय् अडि प्पोत्ति' इत्यस्यां गाथायां वामनः श्रीरामः श्रीकृष्णावतारस्तवः बलरामावतारस्तवः बहुधा कृतः । एवं परिशील्यमाने द्राविडवेदे सर्वत्रापि दशावतारस्तवः अवतारप्रयोजनम् आश्रितसंरक्षणतया महालक्ष्म्याः समाश्रय-

श्चोपवर्णिताः । अत एव श्रीपराशरभट्टार्याः स्वकीये श्रीरङ्गराज-स्तवे पूर्वाचार्यसूक्तिमनुसरन्तः दशावतारान् स्तुवन्ति।

मीनावतारस्तवः -

'मीनतनुस्त्वं नावि निधाय स्थिरचरपरिकरमनुमनुभगवन् ।
वेदसनाभिस्वोक्तिविनोदैरकलितलयभयलपममुमवहः ।।
(श्लो. ६०)

अवान्तरप्रलये मत्स्यावतारो भगवान् भाविसर्गोपयुक्तबीजभूतचराचर-वर्गेण सह मनुमपि नावि निक्षिप्य स्वकीयदंष्ट्रा धृत्वा श्रुत्यर्थानुपदिदेशेति भागवतपुराणप्रसिद्धिः खलु ।

'श्रीनयनाभोद्भासुरदीर्घप्रविपुलसुरुचिस्सुचिश्शिशिरवपुः ।
पक्षनिगीर्णोद्गीर्णमहाब्धिस्थलजलविहरणरतगतिरचरः ।।'

(६१) इति मत्स्यावतारभेदविहारं वर्णितवन्तः । यदा पक्षयोस्सङ्कोचेनाब्धिर्विवृतः, तदा जले सञ्चार इति विभागः, महामत्स्यमूर्तेर्भगवतः प्रलयार्णवोऽपि पल्वलतुल्यं स्थानमभूदिति अवर्णयन् ।

कूर्मावतारस्तवः -

पुराणेषु आदिकूर्मः भुवं वहतीति मन्दरधरकूर्मः मन्दराद्रिं बभारेति उपवर्णितः अस्ति । श्रीपराशरा अपि आदिकूर्मं मन्दरधरकूर्मं स्तुवन्ति स्म ।

'चकर्थ श्रीरङ्गिन् निखिलजगदाधारकमठो
भवन् धर्मान्कूर्मः पुनरमृतमन्थाचलधरः ।
जगन्थ श्रेयस्त्वं मरकतशिलापीठललितो
जलादुद्यल्लक्ष्मीपदकिसलयन्यासमुलभम्।।' (६२)

इत्यस्मिन् श्लोके श्रीपराशराः भगवन्तं धर्मरक्षकत्वेन वर्णयन्तः, अगाधात् पयोनिधिपयस उद्गच्छन्ती लक्ष्मीः कच्छपरूपेण मन्थाना-चलभृतो भगवतः पृष्टोपरि समवचरणौ विन्यस्य समुत्तीर्णेति तदीय-पदकिसलयन्यासयोग्यतैव श्रेयः इति चमत्कारमवर्णयन् ।

**आदिवराहस्तवः -**

'हृदि सुररिपोर्दंष्ट्रोत्ख्याते क्षिपन् प्रलयार्णवं
क्षितिकुचतटीमर्चन् दैत्यास्रकुंकमचर्चया ।
स्फुटधुतसटाभ्राम्यद्ब्रह्मस्तवोन्मुखबृम्हितः
शरणमसि मे रङ्गिन् त्वं मूलकोलतनुर्भवन्।।'

श्रीवराहावतारः श्रीवैष्णवसम्प्रदाये विशिष्टावतारेण परिगण्यते । श्रीवराहचरमश्लोकः प्रपन्नजनैः प्रतिदिनं गुरुपरम्परानुसन्धानवेलायां अनुसन्धीयते ।

'ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् ।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ।।'
(वराहचरमश्लोकः)

इति । आदिवराहस्य पितामहभुवनपर्यन्तमुत्तुङ्गतया तदीयसटाधूनन-जनितभीतिवशेन परिभ्रमता पितामहेन स्तोत्रे कृते तदभयप्रद-वचनायमान स्वगर्जित इति वदन्तः, एवम्भूतः त्वं मे अनिष्टनिवृत्ति-पूर्वकेष्टप्राप्तिसाधनं भवसीति श्रीवराहं प्रणमेमुः ।

**नृसिंहावतारस्तवः -**

श्रीपराशराः मत्स्य-कूर्म-वराहावतारभेदान् स्तुत्वा नरसिंहावतारं त्रिभिः श्लोकैः स्तुवन्ति स्म।

'नृहरिदशयोः पश्यन्नौत्पत्तिकं घटनाद्भुतं
नरमुत हरिं दृष्ट्वैकैकं समुद्विजतेजसः ।
इति किल सिता क्षीरन्यायेन सङ्गमिताङ्गकं
स्फुटदटमहादंष्ट्रं रङ्गेन्द्रसिंहमुपास्महे।।' (६४)

श्लोकेऽस्मिन् उत्पत्तिसिद्धं नरदशासिंहदशयोः सङ्गतिवैचित्र्यं पश्यन् जनः असंङ्कीर्णं नरम् उत हरिं सिहं वा रङ्गेन्द्रेण संघटितयोः नरत्वसिंहत्वयोरत्यन्ताश्चर्यकरं सङ्गतिसौन्दर्यं पश्यतां प्रत्येक-लौकिकनरादिदर्शनं भयजनकमिति कृत्स्नजनो दृष्ट्वा बिभेति इति सिता क्षीरन्यायेन सङ्गमिताङ्गकं स्फुटसटमहादंष्टं सिंहम् उपास्महे इति प्रार्थयन्ति स्म । 'अत्यन्तसुन्दरो नरसिंह एवास्माकं निरन्तरानु-

भाव्य' इति सूचयन्ति । भगवतः नृसिंहस्य तमिळसम्प्रदाये अळयसिंगर इति अत एवामनन्ति। श्रीवैष्णवसम्प्रदाये नृसिंहदेवस्य महत् प्राधान्यं आस्ति।

अथ द्वितीये नरसिंहावतारे श्लोके

'द्विषाण द्वेषोद्यत् नयनवनवह्निप्रशमन-
भ्रमल्लक्ष्मीवक्त्रप्रहितमधुगण्डूषसुषमैः ।
नखक्षुण्णारातिक्षतजपटलैः आप्लुतसट-
च्छटास्कन्धो रुन्धे दुरितमिह पुंस्पञ्चवदनः ।।'

इति स्तुवन्ति स्म । तृतीये तु आश्रितद्विषद्विषयकरोषवानेव जगद्भर्तेति प्रतिपादयन्ति स्म।

'नखाग्रग्रस्तेऽपि द्विषति निजभक्तद्रुषिरुषः
प्रकर्षाद्विष्णुत्वद्विगुणपरिणाहोत्कटतनुः ।
विरुद्धे वैयग्रीसुघटितसमानाधिकरणे
नृसिंहत्वे बिभ्रद्वरदबिभरामासिथ जगत् ।।'

इति विष्णुत्वद्विगुणपरिणाहं यथा तथा उत्कटातनुरिति च प्रस्तौष्यन्, नृसिंहावतारविषये श्रीवेदान्ताचार्याः —

'सटापटलभीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि परिस्फुटद्भुकुटिकेऽपि वक्त्रे कृते ।
दये वृषगिरीशितुर्दनुजाडिम्भदत्तस्तना
सरोजसदृशा दृशा समुदिताकृतिर्दृश्यसे ।।'

इति नृसिंहावतारमूलेन दयाकार्यमवर्णयन्।। (दयाशतके ८४)

वामनावतारस्तवः -

वामनावतारस्तु वेदश्रुतिरूप एवेति पराशराणां दिव्यसूक्तिः । यतो हि वामनावतारविषये वेदः वारं वारं विजयघोषामकरोत् । वामनावतारसौलभ्याश्चर्यगुणचेष्टितं सर्वेऽपि द्रविडवेदद्रष्टारः दिव्यसूरयः मुक्तकण्ठं बहुधा प्रशंसन्ति। श्रीपाञ्चरात्रग्रन्थेषु वामनावताररहस्यं प्रत्यपादि । 'अतो देवा अवन्तुनो यतो विष्णुर्विचक्रमे पृथिव्यासप्तधामभिः इदं विष्णुर्विचक्रमे । त्रेधा निदधे पदम् ।

समूढमस्य पांसुरे। त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । ततो धर्माणि धारयन् । त्रिर्देवः पृथिवीमेष एताम् । विचक्रमे शतर्चनं महित्वा प्रविष्णुरस्तु तवसस्तवीयान्त्वेषं ह्यस्य स्थविरस्य नाम विष्णोर्मुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि योऽस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः इति भगवती श्रुतिः बहुधा श्लाघयामास । द्रविडश्रुतिः - 'अन्रु इव्वुलगमलन्दाय् अडिपोत्ति' इति तिरुप्पावै दिव्य-गाथासु श्रूयते। 'अनु ज्ञालमलन्दपिरान्' (३-३-८) इति श्रीशठकोप-दिव्यसूक्तिः विराजते । एताः मनसि निधाय श्रीरङ्गेशपुरोहिताः वामनावतारविषये सप्तषष्ठितमे श्लोके एवं कीर्तयन्ति स्म ।

'दैत्येन्द्रार्येद्रयाञ्चा विहतिमपनयन् वामनोऽर्थित्वमासी-
र्विक्रान्ते पादपद्मे त्रिजगदणुसमं पांसुलीकृत्य लिल्ये ।
नाभीपद्मश्च मानक्षममिव भुवनग्राममन्यं सिसृक्षुः
तस्थौ रङ्गेन्द्रवृत्ते तव जयमुखरो डिण्डिमस्तत्र वेदः ।।'

(६७) हे रङ्गेन्द्र वामनस्त्वं दैत्यौदार्यं देवेन्द्रराज्यप्रार्थनाञ्च निराकुर्वन् औदार्यगुणवत्त्वेन वधानर्हत्वात् महाबलिहस्तात्प्रतिगृहितं त्रैलोक्यराज्यं देवेन्द्राय प्रदातुं वामनो भूत्वा यञ्चां चकर्थेति आश्चर्यम् किल । इदं त्रिजगत् अणुसमं विक्रान्ते पादपद्मे पांसुलीकृत्य लिल्ये। भवता नाभीपद्मश्च मानक्षममन्यं भुवनग्रामं सिसृक्षुरिव तस्थौ । तव त्रिविक्रमावतारचरित्रे वेदः जय जयेति वचनेन वाचालः डिण्डिमः भवतीति आश्चर्यम् इति प्रर्थयामासुः । तस्मिन् समये परमेष्ठी त्रिविक्रमपादं स्वलोके विराजमानं दृष्ट्वा स्वकमण्डलुजलेन

'नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ।।'

पादप्रक्षालनं कृत्वा विष्णुपादत् गङ्गायाः आविर्भावविषये हेतुर्बभूवेति गाथा रमणीया भवति। श्रीताल्लपाकअन्नमाचार्याः श्रीवैष्णवगायक-सार्वभौमाः आन्ध्रेषु न्यवसन् । ते च श्रीवेङ्कटाचलनाथं वामनाव-तारत्वेन स्तुवन्ति स्म ।

'ब्रह्मकडिगिन पादमु ब्रह्ममु ताने पादमु'

इयं गीतिका सङ्गीतलोके मूर्धन्यमाना विराजते । वामनावतारविषये प्राचीनकविश्लोकः चाटुरूपेणोच्यते । तथा -

'कस्त्वं ब्रह्मन् अपूर्वः क्व च तव वसतिः याखिला ब्रह्मसृष्टिः
कस्ते त्राताह्यनाथः क्व च तव पितरौ नैव तां तं स्मरामि ।
किं तेऽभीष्टं ददामि त्रिपदपरिमिता भूमिरल्पं किमेतत्
त्रैलोक्यं भावगर्भं बलिमिति निगदन् वामनो वस्स पायात् ।।'

**भार्गवरामस्तवः -**

श्रीपराशरभट्टार्याः दशावतारेषु क्रममनुसरन्तः भार्गवरामं स्तुवन्ति स्म।

'भवान् रामो भूत्वा परशुपरिकर्मा भृगुकुलात्
अलावीद्भूपालान् पितृगणमताप्र्सीत् तदसृजा ।
भुवो भाराक्रान्तं लघुतरमुपाचीक्लृपदिति
द्विषामुग्रं पश्योप्यनघमममाजीगणदघम् ।।' (६८)

हे भृगुनन्दन पितृवचनतो मातृवधे कृतेऽपि तत्प्रयुक्तपापरहितोऽसि। परशुरामतया कृतावतारस्सन् दुर्वृत्तान् क्षत्रियान् एकविंशतिसङ्ख्यं क्षत्रियवंशं अच्छिनः । तेषां भूपालानामसृजा स्वकीयपितृकुलं तर्पितवान् । बहुविधदुर्वृत्तक्षत्रिययूथाधिष्ठिततया दुस्सहतरभारव्यथितं भूतलं लघु उपक्लुप्तवान् । एवंप्रकारेण शत्रूणां भयङ्करोऽपि मम पापं न गणितवान् । समाश्रितशत्रुच्छेदनायावतीर्णोऽपि मदीयविरोधिनोऽपि छेद्यकोटौ न परिगणितवानिति विज्ञापयन्ति । अलावीत् अताप्र्सीत् उपाचीक्लृपत् माजीगणत् इत्यादिक्रियापदानि पराशराणां व्याकरणपाण्डित्यं प्रकटयन्ति।

**श्रीरामावतारस्तवः -**

श्लोकेऽस्मिन् दाशरथेः विहारं सङ्ग्रहेण स्मरन्ति। यथा –

'मनुजसमयं कृत्वा नाथावतेरिथ पद्मया
क्वचन विपिने सा चेदन्तर्धि नर्म विनिर्ममे ।
किमथ जलधिं बध्वा रक्षो विधीशमवरोद्धतं
वलिमुखकुलोच्छिष्टं कुर्वन् रिपुं निरपत्रपः ।।' (६९)

हे भगवन् रघुकुलतिलक त्वं तु।

'दश वर्षसहस्राणि दश वर्षशतानि च ।

वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमाम् ।।'[2]

(श्रीमद्रामायणम्)

इति मनुष्यावतारानुकूलं सङ्कल्प्य श्रिया सह अवतेरिथ । सा पद्मा क्वचन विपिने अशोकवनिकायाम् अन्तर्धानरूपलीलाम् अतनोद्यदि जलधिं बध्वा ब्रह्मरुद्रयोर्वरेण दृप्तं राक्षसं रिपुं रावणं काकभोजनं विरचयन् सन् निरवयं चकर्थ। आश्चर्यम् सीता च स्वयमेव रावणराजधानीं जगाम, यत्र च सा 'शीतो भव हनूमतः' (श्री.रा. ५-५३-३१)इति अग्निमादिष्ट्वा स्वपातिव्रत्यं प्रकटयामास। यदि सा 'दग्धो भव दशानन' इति वदेत् तर्हि किमु वाभविष्यत् । अतः तस्याः कृपाविशेषात् देवमुनिपत्नीनां बाधा निरस्ता। विमुक्तिरुपलब्धा अत्र श्रीवचनभूषणमहाप्रबन्धे वरवरमहामुनीन्द्राः –

'इतिहासश्रेष्ठमान श्रीरामायणत्ताल् शिलै यिरुन्द वलेत्तम् शोल्लुकिरतु इति पञ्चमसूत्रस्य व्याख्यानवेलायां पिराट्टि येन्नादे (शिरैयिरुन्दवल्) एन्नरळिच्चेय् ततु । अवलुडय दयातिशयत्तै प्रकाशिप्पिकैकाक, देवदेवदिव्यमहिषियान तन् पेरुमय्युम् पाराते देव स्त्रीकल् शिरयै विडुविकक्कैकाक तान्शिरैयिन्दतु दयापरवशैयायिरे।

इतुवुम् अनुग्रहनिबन्धन माकैयाले इवलुक्कु उत्तेजस्करमामित्तनै । इत्तै रावणबलात्कारत्ताले वन्दताक निनैप्पार इवल् शक्तिविशेष मरियात क्षुद्ररिरे शीतो भव एन्नवल् नष्टो भव एन्नमाट्टालन्नै। आकैयाल् इवल् दयादिगुणङ्गळुक्कु प्रकाशकमेन्नु तिरुवुळ्ळम्पत्ति यायित्तु इवर (शिरैयिरुन्दवल्) एन्नरुळिच्चैयुददु श्री रामायणमेल्लाम् इवलुडैयवेत्तम् शोल्लुकिरतु एन्नुमिडम् 'काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्' इति श्रीवाल्मीकिभगवान् ताने वायालै यिट्टुवैत्तानिरे। श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे एन्नरुलिच्चेय्तारिरे भट्टर् अनुगृहीतवन्तः' इति

---

1 श्रीवचनभूषणम् मुदल्प्रकरणम् पुरुषकारवैभवं पञ्चमं सूत्रम् ।

सीतायाः कारुण्यमेव देवमुनिपत्नीनां विमोचने प्रधानहेतुबर्भूवेति भावयन्ति स्म।

'शरैस्तुसङ्कुलां कृत्वा लङ्कां परबलार्दनः ।
मां नयेद्यदि काकुत्स्थः तत्तस्य सदृशं भवेत्।।'
(श्री.रा. ५-३९-३०)

इति राक्षससंहाराय निदानभूता बभूव। स्वतन्त्रयेन्दिरया स्वच्छन्देनान्तर्धानविहारे विरचिते दशग्रीवस्य को वापराध इति भावः। मनुजसमयं कृत्वेत्यस्य 'आत्मानं मानुषं मन्ये रामं दशरथात्मजम्' इत्युक्तं मर्त्यवृत्तं कृत्वेति विशेषार्थमसूचयन् ।

**बलभद्रावतारस्तवः -**

अथ दशावतारेषु बलभद्रावतारं स्तोतुकामाः एवमारभन्ते –

'यद्भूत्ये विजयापदानगणना कालिङ्गदन्ताङ्कुरैः
यद्विश्लेषलवोऽपि कालियभुवे कोलाहलायाभवत्।
दूत्येनापि च यस्य गोपवनिताः कृष्णागसां व्यस्मरन्
तं त्वां क्षेमकृषीवलं हलधरं रङ्गेश भक्तास्महे ।।' (७०)

श्रीपराशरभट्टार्याः बलरामस्य महिमानं एवं कदाचित् पौराणिककथया प्रकट्यन्ति स्म।

हे रङ्गेश यद्भूत्ये विजयापदानगणनाकालिङ्गस्यदन्ताङ्कुरैः अभवदिति वदन्तः कदाचित् कालिङ्गेन साकं द्यूतविहारकारी बलभद्ररामः तेन चलद्यूततो विजयवादे कृते कपोलताडनेन तदीयदशनान् पातयामासेति पौराणिककथां ज्ञापयन्ति स्म। एवमेव बलरामस्याल्पकालीनविप्रयोगोऽपि कालीयाख्यसर्पसंभूताय कलकलायाभवदिति, कालीयमर्दनोद्युक्तचित्तेन कृष्णेन स्वाग्रजसन्निधानाभावसमय एव कालीयनागनिवासभूतकालिन्दीह्रदयान्तराले तदीयपानीयपानव्यपगतप्राणगोगोपप्राणनायावतीर्य स्वाभिमुखाभिया तदीय फणासहस्रक्षिप्तविचित्रनर्तनेनात्यन्तश्रान्तस्सोऽन्यत्र निरस्त इति। एवं गोपवनिताः हलधरस्य दूत्येन घटकबलभद्रचाटूक्त्या कृष्णकृत-

प्रणयापराधान् विस्मृतवत्य इति एतादृशक्षेमकृषीवलं हलधरं भजिष्याम इति व्यजिज्ञपन्।

**श्रीकृष्णावतारस्तवः -**

विभवावतारेषु सौलभ्यगुणमण्डितः दिव्यावतारः श्रीकृष्णावतार एव । तादृशाद्भुतशिशोः जननी देवकी विशिष्टगुणवती खल्विति तां प्रथमतः श्रीपराशराः स्तुवन्ति स्म। यथा -

'आकण्ठवारिभरमन्दरमेघदेश्यं
पीताम्बरं कमललोचनपञ्चहेति ।
ब्रह्म स्तनन्धयमयाचत देवकी त्वां
श्रीरङ्गकान्त सुतकाम्यति का परैवम्।।'

'देवकीपूर्वसन्ध्यायामाविर्भूतं महात्मना ।'

इति भगवता व्यासेनापि श्रीकृष्णावतारः स्तुतः ।

देवक्याः सौभाग्यं मनसि निधाय पराशराः -

"देवकी त्वाम् आकण्ठवारिधरमन्दरमेघदेश्यं पीताम्बरसंवीतं कमललोचनपञ्चहेति परब्रह्मभूतं स्वकीयस्तनन्धयत्वेन प्रार्थितवती खलु । केवलस्वरक्षणमात्रशक्तपुत्रप्रार्थिन्यन्या का वा एवं पुरुषोत्तमं स्वपुत्रत्वेनेच्छति इति आश्चर्यं प्रकटयन्ति । 'जन्म कर्म च मे दिव्यम्' इति भगवता स्वेनैवोक्तम् । दिव्यजन्मवतः पुरषोत्तमस्य माता देवकी । परब्रह्मणः जननी बभूवेति आश्चर्यं प्रकटयन्ति ।

अथाप्लुतशिशोर्दिव्यं कर्म मधुरमधरं व्याचक्षाणाः पराशराः अपरस्मिन् श्लोके भगवतो वेणुनादं विज्ञापयन्ति –

'शैलोऽग्निश्च जडाम्बभूव मुनयो मूढांबभूवुर्जडाः
प्राज्ञामासुरगास्सगोपममृतामासुर्महाशीविषाः ।
गोव्याघ्रास्सजांबभूवुरपरे त्वन्यां बभूवुः प्रभो
त्वं तेष्वन्यतमां बभूविथ भवद्वेणुक्वणोन्मादने ।।'[1](७२)

---

[1] अतिमानुषस्तवे ४६ श्लोकः वेणुनादप्रभावं सूचयति ।

'धन्यैः श्रुतं तदिह तावकरासकाले गीतेन येन हि शिलास्सलिलां बभूवुः ।

हे प्रभो कृष्ण भवतः मुरळीनादेन चेतनाचेतनात्मके कृत्स्नेऽपि जगत्युन्मत्तता बभूव, शैलः काठिन्यं विहाय द्रवति स्म । वह्निरौष्ण्यं विहाय शीतोऽभवत् । मुनयः वेणुगानभोग्यतासक्तचित्ततया निरन्तरं स्वमन्तव्यवस्तुमननाक्षमा बभूवुरिति, जडाः अगाः नाम अज्ञाः वृक्षाश्च सगोपं वेणुगानस्वस्यानुभवरसिका आसन्निति महाशीविषाः अमृतामासुरिति, दृष्टिविषा विषधारा अपि चन्द्रबिम्बवदमृतस्यन्दिनो बभूवुरिति, तथैव गोव्याघ्राः जातिवैरं निरस्य सहजांबभूवुरिति, अपरे तु यमुनातीरे वनवासिनः सर्वे चराचरा अपि वेणुगानोपभोगप्रतिकूलं स्वं स्वं स्वभाववैषम्यं विहाय तदुपभोगानुकूलस्वभावा बभूवुरिति, एवमेव 'यः सर्वज्ञः सर्वविदि'ति (मु. १-१-९) प्रतिपादितसार्वज्ञ्यस्त्वमपि तेषु चराचरेषु अन्यतमांबभूविथ कार्यान्तरपरिज्ञानहीनस्वान्तोऽभव इति चित्रणं परमाद्भुतं भवति ।[1]

अस्मिन् श्लोके भूमाविद्या भगवता श्रीकृष्णेन प्रदर्शिता । भूमाशब्दवाच्यो भगवान् नारायण एवेति नारदाय भगवान् सनत्कुमारः उपादिशत् । छान्दोग्योपनिषदि सप्तमाध्याये 'यो वै भूमा तत्सुखम्' 'यत्र नान्यत् पश्यति नान्यच्छ्रुणोति, नान्यद्विजानाति स भूमा' (छा. ७-२४-१) । अथ यत्रान्यत्पश्यत्यन्यच्छ्रुणोत्यन्यद्विजानाति तदल्पम्', 'भूमा संप्रसादादध्युपदेशात्' (ब्र. सू. १-३-७२) इति शारीरकमीमांसाभाष्ये प्रथमाध्याये तृतीयपादे उक्तत्वात्, संप्रसादात् - जीवात्, अध्युपदेशात् - अधिकत्वेनोपदेशात्, भूमा - भूमशब्दवाच्यः परब्रह्मैव । अत्र

---

पञ्चापि किञ्च परिवृत्तगुणानि भूतान्युर्वीकृशा नु मरुदम्बरशम्बराणि ।।'
वेणुस्वनश्रुतरसौघपरिप्लुतान्ते स्वेसृक्वणीरसनया लिलिहुर्भुजाङ्गाः'।
(श्लो.४७) इति स्वपितृपादाननुसरन्तः पराशराः उपरितनश्लोकं रचयामासुः । अस्य श्लोकस्य विवरणम् श्रीमद्भिः न. च. रघुनाघाचार्यैः कोव्वूरु गौडीयमठे उपन्यस्तम् । तेषां मुखतः स्वीकृतोऽयं विशेषार्थः ।

[1] अत्र जलादीनां पदानां सनाद्यन्ता धातव इति धातुसञ्ज्ञायां कास्प्रत्यया-दाममन्त्रे लिट् इति आम्प्रत्यये कृञ्चानुप्रयुज्यते लिटि इति कृभ्वस्तिना-मनुप्रयोगः रसघनः ।

श्रीकृष्णमुरळीरवः सकलचराचरमुन्मत्तं चकार । शैलोऽद्रवत्, वह्निः शीततां गतः, मुनयो मूढा बभूवुः, अज्ञाः वृक्षाः, गोपबालाश्च ज्ञानिनोऽभवन्, आशीविषा अमृतात्मका बभूवुः, गोव्याघ्राः सहजा जाताः, इतरे तु यमुनातीरवनवासिनो वेणुगानलोलुपाः, त्वमपि तेषु सचराचरेषु कार्यान्तरपरिज्ञानहीनस्वान्तोऽभवः इति भगवतः सर्वस्मात् परत्वं भगवतः सन्निधौ नियमरहितप्रकृतिः प्रदर्शिता । केवलं भगवतः तत्त्वमेव नान्यच्छृणोति वत् जागरितम् अहो वेणुनादविशारदस्य भूमाशब्दवाच्यस्य प्रभावः।

**कल्क्यवतारस्तवः -**

श्रीपराशराः दशावतारेषु सम्भविष्यमाणं कल्क्यावतारं स्तुवन्ति स्म।

'कल्कितनुर्धरणीं लघुयिष्यन् कलिकलुषान्विलुनासि पुरा त्वम्।
रङ्गनिकेतन लुनीहि लुनीहीत्यखिलमरुन्तुदमद्य लुनीहि ।।' (७३)

इत्यनेन श्लोकेन हे रङ्गनिकेतन कलिविग्रहस्त्वं दुर्वहदुष्टजननिवह-निहितभाराक्रान्तभूतत्वं लघूकरिष्यन् सन् कलिकालाकलितदुष्कृतक्षुब्धान् छेत्स्यसि। अरुन्तुदम् अद्यैवाखिलं लुनीहि लुनीहि लुनीहि इति प्रार्थयामासुः। कलियुगावसाने प्रदुर्भविष्यद्भ्योऽपि वर्तमाना एव दुर्वृत्ताः क्रिमिकण्ठादयः सात्त्विकसङ्घातकण्टका इति साम्प्रदायिकोऽभिप्रायः । इत्थं श्रीपराशरभट्टपादाः दशावतारस्तोत्रं बहुविधं कारयामासुः। श्रीवेदान्ताचार्याः स्वकीये दशावतारस्तोत्रान्ते

'स्वेच्छामीनविहारकच्छप महापोत्रिन् यदृच्छा हरे।
माया वामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लभ कल्कवाहनदशाकल्किन्निति प्रत्यहं
जल्पन्तः पुरुषा पुनन्ति भुवनं पुण्यौघपण्यापणाः ।।' (१२)

इति दशावतारान् स्तोत्रयामासुः।।

इत्थं मन्त्ररत्नोत्तरखण्डविवरणतया प्रवृत्तेऽस्मिन्नुत्तरशतके कैङ्कर्यप्रार्थना किल प्राधान्येन प्रतिपाद्य तदनुगुणेन दुर्नयनिरा-करणपूर्वकम् उपबृह्मणैस्साकं त्रयीप्रामाण्यं प्रतिपाद्य, परमशेषिविषय-

कैङ्कर्यस्यैवात्यन्तोद्देशतया, श्रीरङ्गनाथस्य परव्यूहविभावान-भिष्टूयाशरण्यशरण्यतया कृत्स्नजनसमर्चनीयमर्चावतारं प्रस्तुत्य, कैङ्कर्यप्रार्थनतया स्तोत्रं परिसमापयन्ति।

**अर्चावतारसौलभ्यवर्णनम् -**

श्रीमन्तः श्रीकूरेशमिश्राणां तनयाः परव्यूहविभावताराणां वर्णनम् कृत्वा सम्प्रति अर्चावतारसौलभ्यं प्रतिपादयन्ति। अर्चावतार एव सर्वभूतानां सुलभाश्रयणीय इति तमेव स्तुवन्ति स्म –

'आस्तां ते गुणराशिवद्गुणपरीवाहात्मनां जन्मनां
संख्या भौमनिकेतनेष्वपि कुटीकुञ्जेषु रङ्गेश्वर ।
अर्च्यस्सर्वसहिष्णुरर्चकपराधीनाखिलात्मस्थितिः
प्रीणीषे हृदयालुभिस्तव ततश्शीलाज्जडीभूयते।।' (७४)

हे श्रीरङ्गेश्वर ते ज्ञानशक्त्यादिगुणगणानामिव दयावात्सल्य-सौशील्यादिगुणप्रवाहरूपाणामवताराणां सख्या तिष्ठतु। श्रीरङ्गराज-गुणगणानां तथा संख्या न विद्यते, तथैव प्राधान्येन दयादि-गुणाविष्कारवतामवताराणामपि न संख्येत्यर्थः। स्वभावतः समस्त-कल्याणगुणामृतोदधित्वात् एवमेव भूमिभवेष्वालयेषु गृहिणां गृहेषु, मुनीनामुटजेष्वपि श्रीपाञ्चरात्रादिशास्त्रप्रकारेण सर्वजनसमर्चनीयोऽसि । सर्वापचारक्षमः त्वम् भवानर्चकपराधीनाखिलात्मस्थितस्सन् प्रीणीषे । यथा –

'त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्ट भोजनोदासास्तव मायां जयेमहि।।'

इत्युक्तप्रकारेण यदा यस्यार्चकस्य स्रग्गन्धादिषु यद्वस्तु भगवतोपभुक्तं स्वीकार्यतयाभिलषितं, तदानीं तदेव वस्तु स्वस्वभोग्यतया स्वीकार्य प्रीतो भवसि इत्यर्थः । तव तस्मात् शीलात् हेतोः सहृदयैः त्वदीयं तादृशं शीलं महतो मन्दैस्सहनीरन्ध्रेण संश्लेषरूपमनुसन्धाय हृदयालवोऽज्ञा भवन्तीत्यर्थः। विभवावतारसौशील्यानुसन्धानेन मोहं भजतां महतामर्चावतारसौशील्यानुसन्धानं प्रेमान्ध्यावहमिति किमुत वक्तव्यमित्यभिप्रायं प्रकटयन्ति स्म।

अर्चावतारास्य सौशील्यतां पराशराः एवं प्रतिपादयन्ति। हे श्रीरङ्गेश्वर परमं पदं स्थानं वाड्मनसापरिच्छेद्यवैभवं भवति। सर्वेऽवताराः क्वचित्काले प्रादुरभवन् न सर्वदेति वदन्ति। एतत्सर्व-समर्चनीयतयावस्थानं विश्वजनीनं परमपदव्यूहावस्थानादि-वद्देशविप्रकर्ष विभवावतारवत् कालविप्रकर्षश्च नास्तीति कृत्वा भवान् श्रीरङ्गधामनि आर्तस्वागतिकैः कृपाकलुषितैः नाम निर्हेतुकनिरवधिककारुण्यपूर्णतया चेतनगुणगणदोषविचाररहितैः कटाक्षैः तापत्रयाभितप्तान् शीतलीकुर्वन् त्वं जगद्रक्षापर्यालोचनया पुनः पुनः प्रतिहतया जागर्यया योगनिद्रां तनोषि इति भगवतः सौशील्यगुणं प्रार्थयामासुः । तदनु आचार्याः श्रीरङ्गशायिनः सौशील्यातिशयं प्रकाशयितुं सत्यलोकसाकेत-पुरनिकेतनस्त्वं सह्यजान्तरीपं परिष्करोषि इति त्रिभिः श्लोकैः अनुजगृः । यथा – 'सर्गाभ्यासविशालया - - - पद्मैरिवार्जितैः' इत्यस्मिन् श्लोके सर्गाभ्यासविशालया निजधिया अनन्तेशयं जानन् सहधर्मचाररतया भारत्या स्वाधीनसंकीर्तनः कमण्डलुगलद्गङ्गा प्लुतः त्वां मुखलोचनाञ्जलिपुटैरावर्जितैः पद्मैरिव ब्रह्मा बहून् कल्पानेवापूजयत्। स्वार्जितैरम्बुजैस्समर्च्य, स्वाञ्जलिस्वलोचनैः दिव्यमङ्गलविग्रहमनुभूय शिरसा चरणयोः प्रणनामेति यावत् ध्यानकीर्तनप्रणामैर्मानसवाचिककायिकपूजा उच्यन्त इति मन्तव्यम् । अत एव

'श्रीपतिं पद्मजाराध्यमिक्ष्वाकुकुलदैवतम् ।
पूर्वदोशिकनिक्षेपं वन्दे श्रीरङ्गनायकम्।।'
(श्रीरङ्गक्षेत्रमाहात्म्यम्)

इति ब्रह्मा नैकानि कल्पानि श्रीरङ्गनाथं प्रपूजितवान् इति ज्ञापितवन्तः । तदनु मनुकुलमहीपालव्यानम्रमौलिपरम्परामणिमकरिकारोचित-नीराजिताङ्घ्रिसरोरुहः । स्वयं मैथिलीरमणवपुषा श्रीरङ्गधामनि स्वेन स्वार्हाणि आराधनानि लम्भितः असीति, ब्रह्मणस्सकाशादिक्ष्वाकुणा साकेतं नीते श्रीरङ्गविमाने अर्चकपराधीनाखिलात्मस्थितिरित्युक्तरीत्या भावानभिज्ञसमर्पितस्वीकाररूपक्लेशराहित्येन स्वोचितान्याराधनानि सह

पत्न्या विशालाक्ष्या नारायणमुपागमदित्यादिनोक्तानि स्वयं प्रापितोऽसीति विशेषार्थं प्रत्यबोधयन् ।

अथ तृतीये 'मन्वन्ववाये — नाथसुखाकरोषि' इत्यस्मिन् श्लोके हे नाथ त्वं धन्ये द्रुहिणे मन्वन्ववाये पुरस्कृतेन विभीषणेनैव मध्येसरित् 'मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम्' इत्यादिभिरात्मगुणैः दरिद्राणं मादृशमकिञ्चनजनं दिव्यमङ्गलविग्रहसौन्दर्यसाक्षात्कारादिभिरानन्दयसीति प्रार्थयामासुः ।

इत्थम् अशरण्यशरण्यत्वाय श्रीरङ्गनायकतयावतीर्णो भगवान् गायत्र्यादिश्रुत्यन्तवचनैरादित्यान्तर्वर्ति परंज्योतिष्ट्वादिना-भिष्टुतः इति चतुर्भिः श्लोकैः श्रीपराशरभट्टपादाः निष्कर्ष्ययन्ति स्म।।

**श्रीरङ्गनाथस्य गायत्रीमन्त्रप्रतिपादकत्वम् -**

श्रीपराशरभट्टपादाः श्रीरङ्गराजस्तवे पूर्वाचार्यश्रीसूक्तिवचनानि श्रुतिवाक्यानि पुराणवचनानि तत्तत्पदनिक्षेपेण बहुचमत्कारं सूचयन्ति। इदानीं गायत्र्यादिवेदान्तवाक्यैः सूर्यान्तर्वर्तिः परंज्योतिः नारायणः एवेति वदन्तः

'तेजः परं तत्सवितुर्वरेण्यं धाम्ना परेणाप्रणखात् सुवर्णम्।
त्वां पुण्डरीकेक्षणमामनन्ति श्रीरङ्गनाथं तमुपासिषीय।।' (७९)

इत्यस्मिन् श्लोके सर्वोत्कृष्टं वरणीयं प्रसिद्धं सवितृमण्डलमध्यवर्ति भर्ग आमनन्ति । अत्र सवितुः तेजः गायत्रीमन्त्रपदानि । गायत्र्यां भर्गशब्दः तेजोवाचकः । 'ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायणः' (बृहत्पराशरसंहिता) इत्युपबृंहितं च नारायणस्यैव परतेजस्त्वम्। 'नारायणपरो ज्योतिरात्मा नारायणः परः' (तै.ना.) इति श्रुतिः प्रतिपाद्यते खलु।

'यो देवस्सवितास्माकं धियो धर्मादिगोचराः ।
चोदयेत्तस्य यद्भर्गः तद्वरेण्यमुपास्महे।।'

इति गायत्रीव्याख्यानरूपश्लोकोक्तप्रकारेण सवितृशब्दस्यैव भगवद्वाचकत्वे सवितुस्तेज इति निर्देशो ब्रह्मणस्स्वरूपमितिवत् सवितृरूपं तेज इत्यर्थः । एवं परेण धाम्ना शिखामारभ्य नखपर्यान्तं

स्वर्णमयं पुण्डरीकेक्षणं च आमनन्ति। अत्र श्रुतिः 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते। हिरण्यश्मश्रुः हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति छान्दोग्य-वाक्यानि (१-६-६) प्रमाणानि भवन्ति।

कप्यासमित्यादेः वेदार्थसङ्ग्रहे 'गम्भीराम्भस्समुद्भूतसुमृष्ट-नालरविकरविकसितपुण्डरीकदलामलायतेक्षणः' इति उक्तः । एवमुक्त-प्रकारेण सर्वस्मात्परत्वे सत्यपि श्रीरङ्गनायकतया सर्वसुलभं त्वाम् उपसन्नो भूयासमिति विज्ञापयन्ति स्म।

अथानन्तरेश्लोके सूर्योपस्थानमन्त्राधिष्टितः नारायण एवेति विवृण्वन्ति।

'आत्मास्य गन्तुः परितस्थुषश्च मित्रस्य चक्षुर्वरुणस्य चाग्नेः
लक्ष्म्या सहौत्पत्तिकगाढबन्धं पश्येय रङ्गे शरदश्शतं त्वाम्।।' (८०)

परिदृश्यमानस्य प्रत्यक्षादिप्रमाणगोचरस्य गन्तुः परितस्थुषः आत्मा भवसि। मित्राभिधदेवस्य वरुणस्याग्नेश्च चक्षुः भवसि इति वदन्तः श्लोकेत्र सूर्यपस्थानमन्त्रपदानि यथातथमनिवेशयन् ।

यथा श्रुतिः 'चित्रं देवानामुदगादनीकं चक्षुमित्रस्य वरुण स्याग्नेः । आप्राद्यावा पृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च चक्षुर्मित्रस्य वरुणस्याग्नेः' इति उपलक्षणं चक्षुर्देवानामिति श्रुत्यन्तरस्य विद्यमानत्वात् । लक्ष्म्या सह स्वाभाविकदृढसम्बन्धं त्वां रङ्गे शरदश्शातं साक्षात्कारवाम इति प्रार्थयामासुः।

श्रीपराशरभट्टार्याणां वेदभागे महान् परिचयोऽस्ति । वेदवेदान्तेतिहासपुराणादिषु प्रतिपादितं श्रीमन्नारायणतत्त्वं श्रीरङ्ग-राजस्तवे श्लोकेषु साभिप्रायविशेषणैः तत्तत्पदैरसूचयन् । प्रमाणवाक्यं विना श्लोकरचनां न कुर्वन्ति स्म। अहो वेदान्तपरिचयः आचार्यसार्वभौमानाम्। 'पश्येम शरदश्शतम्। जीवेम शरदश्शतम् । नन्दाम शरदश्शतम्' इत्यादिश्रुतिवाक्यस्मरणमत्र शरदश्शतं इति पदेन प्रदर्शितम् ।

श्रीपराशरभट्टपादाः श्रीगुणरत्नकोशे 'श्रीरङ्गे शरदश्शतं सह सुहृद्वर्गेण निष्कण्टकम्' (६२) इति प्रार्थितिवन्तः । श्रीरङ्गनाथ-दिव्यधामनि एव मदीयं जन्म भवत्विति भट्टपादानामाशयः, श्रीरामानुजाचार्याणां शरणागतिगद्यवाक्यं 'यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्व' इति स्मारयति।

**ज्ञानयज्ञोपास्यः रङ्गनाथ एवेति कथनम् -**

'यस्यास्मि पत्युर्न तमन्तरेमि श्रीरङ्गतुङ्गायतने शयानम्।
स्वभावदास्येन च योऽहमस्मि स सन् यजे ज्ञानमयैर्मखैस्तम् ।।'

एकाशीतितमे श्लोके दास्यमभिलषन्ति स्म ।

'दासभूताः स्वतस्सर्वे ह्यात्मनः परमात्मनः ।
नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च ।।'

(विष्णुतत्त्वसंहिता)

इत्युक्तेन स्वाभाविकेन दासभावेन योऽस्मि तादृशदासस्सन् श्रीरङ्ग-तुङ्गायतने शयानं तं विनान्यं स्वामिनं न भजामिति 'योऽहमस्मि स सन् यजे' 'यस्यास्मि न तमन्तरेमि' (यजुरष्टकम्) इति श्रुतिरत्राभि-प्रेता भवति । 'ज्ञानयज्ञेन चाप्यन्ये यजन्ते मामुपासते' (भ.गी.९-१५) इति गीताशास्त्रमनुसृत्य ज्ञानमयैर्मखैः तमेव शरणं भजामि इति प्रार्थितवन्तः । श्रीवैकुण्ठगद्ये 'भगवन्तं नारायणं ध्यानयोगेन दृष्ट्वा भगवतो नित्यस्वाम्यमात्मनो नित्यदास्यं च यथावास्थित-मनुसन्धायेत्यारम्य श्रीमत्पादारविन्दयुगलं शिरसि कृतं ध्यात्वामृत-सागरान्तर्निमग्नसर्वावयवः सुखमासीत' इत्यन्तं ज्ञानयज्ञयजनमत्र विवक्षितमिति सम्प्रदायिकाभिप्रायः भोग्यो भवति । पूर्वार्थस्योपाय-परत्वम्, उत्तरार्थस्य उपेयपरत्वमिति विभागः प्रतिपादितः ।

**अमृतं देवानामायुः प्रजानामिति श्रुतेः समन्वयः -**

श्रीपराशरार्याः श्रुतिवाक्यानि स्वश्लोके निक्षिप्य सप्रमाणं श्रीरङ्गराजं कुलदैवतं स्मरन्ति। हे रङ्गबन्धो प्रजानामायुः सुराणाममृतं भवसि । अतो त्वामेव शरणं प्रपद्ये इति प्रार्थयन्ति। तद्यथा --

'आयुः प्रजानाममृतं सुराणां रङ्गेश्वर त्वां शरणं प्रपद्ये

मां ब्रह्मणेऽस्मै महसे तदर्थं प्रत्यञ्चमेनं युनजै परस्मै ।।'

(८२) अत्र श्रुतिः 'यत्र पूर्वे साध्यास्सन्ति देवाः' इत्युक्तानां नित्यमुक्तानां भोग्यभूतं बद्धानां मुक्तिसिद्धौ सिद्धोपायभूतं नित्यानां मुक्तानां च निरन्तरानुभाव्यमुपादेयभूतं च विशेषणद्वयपर्यवसितोर्थः व्यञ्जितः । एव भूतं रङ्गेश्वरम् आश्रयणसौकर्याय शरणत्वेनाध्यवस्यामि इति मनसा प्रपद्य कायिकं प्रपदनं अनुतिष्ठन्ति। 'नारायणपरंब्रह्म तत्त्वं नारायणः परः । नारायणपरोज्योतिरात्मा नारायणः परः।।' इत्युक्तप्रकारेण परंब्रह्मपरंज्योतिश्शब्दवाच्यायापि सर्वसमाश्रयणीयतया श्रीरङ्गराजाय तच्छेषभूतं प्रत्यगात्मानं तच्छेषत्वज्ञानवन्तं शेषत्वज्ञानानुगुणभगवच्चरण-नलिनयुगलनिरन्तरपरिचार्याकांक्षिस्वान्तं मां योजयानि इत्ययं वैष्णवसंप्रदायभावः श्रुतिसम्मत एव । यथा –

'अमृतं देवानामायुः प्रजानामिन्द्रं राजानं सवितारमेतं
वायोरात्मानं कवयो निचिक्युः' (तै.आ.३)
'ब्रह्मणे त्वामहस ओमित्यात्मानं युञ्जीत' (तै.ना.५२)

इति श्रुतिद्वयमन्त्रानुसन्धेयं भवति उत्तरार्थस्य फलपरत्वेनापि योजना समीचीना। तदानीं परस्मै ब्रह्मणे महसेऽस्मै प्रत्यञ्चमेनं मां तदर्थं युनजै। अतः प्रपद्ये इत्येकवाक्यतयान्वयः तदर्थं तत्किङ्करं मां पालय इति प्रार्थितवन्तः ।

अत्र द्रविडवेदश्रुतिरपि प्रजानां नित्यसूरिणां च भगवानेव कारणभूत इति बोध्यते –

'एन्दै तन्दै तन्दै तन्दै तन्दैक्कुम् मन्दै
वानवर वानवर कोनोडुम् ।
शिन्दिपूमगळिम् तिरुवेङ्गडत्तु
अन्दमिल् पुगळ् कारेडिलण्णले ।।' (तिरुवाय्मोळि ३-३-२)

**उदारस्सर्व एवैते इति गीताशास्त्रसमन्वयः -**

श्रुतिस्मृतिपुराणेषु भगवान् श्रियःपतिरेव प्रतिपादित इति 'श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे' इति भगवद्रामानुजाचार्याणां

श्रीभाष्यमङ्गलश्लोकानुगुणं स्वरङ्गराजस्तवमुखेन विवृण्वन्तः । सम्प्रति भगवद्गीताशास्त्रवचनसमन्वयं प्रदर्शयन्ति स्म।

'आर्तिं तितीर्षुरथ रङ्गपते धनायन्
आत्मम्भरिर्विविदिषुर्निजदास्यकाम्यन् ।
ज्ञानीत्यमून् सममथास्सममत्युदारान्
गीतासु देव भवदाश्रयणोपकारात्।।' (८३)

इत्यनेन श्लोकेन

'चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ।।
तेषां ज्ञानी नित्ययुक्तः एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।।
उदारास्सर्वे एवैते ज्ञानी त्वात्मैव मे मतम्।।'
(भ.गी. ७- १६,१७,१८)

इति भगवान् श्रीकृष्णः आर्तान् जिज्ञासून् अर्थार्थिनः ज्ञानिनः उदाराः इति प्रशंसितवान् । लोके दातुरेवोदारता दृष्टा, तथापि प्रतिग्रहीतॄनेतानुदारानिति वदसि तत्र हेतुराश्रयणरूप एवोपकार इति भावयसि। नष्टैश्वर्यकामापूर्वैश्वर्यकामस्वात्ममात्रानुभवकामभगवदनुभवकामैश्चतुर्भिः अप्यधिकारिभिराश्रयणमेव स्वस्मै महानिधिप्रदानवन्मत्वा तेषां यथामनोरथं प्रत्युपकरोति इति वदन्तः श्रीरङ्गनाथस्य समाश्रितजनसकलफलप्रदानं भगवतोऽत्यन्ताभिमतं भवतीति हर्षोत्फुल्लमानसेनोदाहृतवन्तः ।

एवं तदनन्तरे चतुरशीतितमे श्लोके ज्ञानिनां वर्णाश्रमोपयुक्तकर्मणां वर्तनमपि तव दास्यानुकूलमेव भवतीति ज्ञापयन्ति। हे श्रीरङ्गेन्दो ममकाररहिताः फलासक्तिरहिताः केचन ज्ञानिनः भगवदनन्यार्हं शेषत्वैकवेषं स्वात्मानमधिकृत्य प्रवृत्ताभिः स्वबुद्धिभिः नित्यं काम्यं परमपि

'स्वशेषभूतेन मया स्वीयैरेव परिच्छदैः ।
विधातुं प्रियमात्मानं देवः प्रक्रमते स्वयम्।।'

'मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्मयो भूत्वा युध्यस्व विगतज्वरः ।।' (भ.गी.३-३०)

इत्याद्युक्तप्रकारेण सर्वान्तर्यामिणि सर्वनियन्तरि भवति कर्तृत्वमारोप्य निर्ममो निराशीरिति गीतावचनस्य विशेषणद्वयं अममाः असङ्गाः इत्यत्र श्लोके प्रत्युक्तमिति ज्ञायते। निर्ममः इत्यस्य स्वस्मिन् कर्तुत्वासक्तिरहितः इति, निराशीः इत्यस्य फलासक्तिरहित इति विशेषार्थः । विहितमित्यनेन काम्यकर्माणि निषिद्धं व्यावृत्तं निषिद्धकाम्यरहितं कुरु मां नित्याकिङ्करमित्यभियुक्तोक्तेः ते उक्तप्रकारेण नित्यनैमित्तिक-काम्यकर्मानुष्ठातारः नानुतिष्ठन्ति चेति कुर्वन्नपि न लिप्यते इति गीतावाक्यप्रमाणत्वेन ज्ञानिनां विशिष्टत्वं ज्ञापयामासुः । एतेषां न कदापि प्रतिबन्धकं भवेत्।

'कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागस्सात्त्विको मतः ।।'

(भ.गी.२८-९) इति ते ज्ञानिनः कर्मपरित्यक्तवन्त एवेति प्रत्यपादयन् । अतः पञ्चाशीतितमे विविदिषुज्ञानिनो फलसाधनभेदं विविनक्ति स्म। यथा — 'प्रत्यञ्चं स्वं पञ्चविंशं - - - आप्नुवन्ति' इति श्लोके हे रङ्गनाथ प्रत्यञ्चं स्वं इदमिति प्रतीयमानात् तत्त्वराशेः पञ्चविंशं विविच्य संचक्षाणाः नाम प्रकृतिमहदहङ्कारपञ्चतन्मात्रपञ्चभूत-कर्मेन्द्रियपञ्चकज्ञानेन्द्रियषट्कात्मकचतुर्विंशतिसंख्याकादचित्तत्वसमुदाय ात् पञ्चविंशति संख्यापूरकतया पृथक्कृत्य अचिद्विलक्षणतया ज्ञात्वेत्यर्थः । ऋतंभरायां नाम सत्यं बिभर्तीति तस्यां संशयविपर्यय-रहितायां स्वबुद्धौ स्वं वा परमात्मानं त्वां वा ध्यायन्तः देहात्मविवेकानन्तरं स्वस्वातन्त्र्यभगवदन्यशेषत्वादिमोहरहितायां बुद्धौ स्वमारोप्य ध्यायन्तः स्वमेव प्राप्नुवन्ति । भगवन्तं ध्यायन्तः भगवन्तं प्राप्नुवन्ति। स्वात्मनो देहेन्द्रियाद्यचित्तत्त्वविवेकज्ञानं परमात्मशेषत्वज्ञानं चोभयोरधि-कारिणोरावश्यकम् । तत्र परमात्मात्मकस्वात्मोपासकाः केवलं स्वात्मानं तत्क्रतुन्यायेन फलतयानुभवन्ति।

स्वात्मशरीरकसकलकल्याणगुणविशिष्टपरमात्मोपासकाः तथाविधं परमात्मानमनुभवन्तीति सम्प्रदायार्थः शेषशेषिभावः स्मरणीयः भवति।।

**अन्तरात्मभूतभगवदुपासकानां वैभवः -**

अन्तरात्मभूतभगवदुपासकाः परमोत्कृष्टाः भवन्ति इति श्रीपराशराः वदन्तः भगवन्तं पृच्छन्ति स्म ।

'अथ मृदितकषायाः केचिदाजानदास्य-
त्वरितशिथिलचित्ताः कीर्तिचिन्तानमस्याः ।
विदधति ननु पारं भक्तिनिघ्ना लभन्ते
त्वयि किल ततमेत्वं तेषु रङ्गेन्द्र किं तत्।।' (८६)

इत्यस्मिन् श्लोके हे रङ्गेन्द्र मृदितकषायाः नाम कर्मयोगाभ्यासेन मन्दीकृतरागद्वेषादिचित्तकालुष्याःसमुत्पन्नभगवद्ज्ञानाः ते स्वाभाविकभगवद्दास्ये त्वरितशिथिलचित्ताः केचित् संकीर्तनध्यानप्रमाणान् प्रकुर्वन्ति।

'सततं कीर्तियन्तो मां यतन्तश्च दृढव्रताः
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ।।'

(भ.गी. ९-१४) इत्युक्तभक्तिपरवशाः परमप्राप्यभूतं भवन्तं प्राप्नुवन्ति। तादृश-भक्तियुक्तास्ते सर्वान्तरात्मत्वे साधारणेत्युपासकानुग्रहाय विग्रहविशिष्टतया तदीयहृदयकमलनिलये भगवति भवति परतन्त्रस्वस्वरूपस्थितिप्रवृत्तयो वर्तन्ते खलु। तेषु भक्तेषु त्वं वर्तसे इति तत् किमिति पृच्छन्ति अनन्याधीनस्वरूपस्थितिप्रवृत्तेः भवतो भक्तजनायत्तस्वरूपादिमत्त्वमत्याश्चर्यावहमिति प्रकटयन्ति। अत्र हि –

'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।' (भ.गी.७-२७)

'ज्ञानी त्वात्मैव मे मतम्।' (भ.गी.७-२८)

'ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्'

इत्यादीनि भगवद्वचनानि स्मरणीयानि भवन्ति।।

**भगवानेव उपायः उपेयश्चेति कथनम् -**

उभयपरिकर्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगैकलभ्यः इत्युक्तप्रकारेण भगवतो भक्तिसाध्यत्वेऽपि तस्यैव सिद्धोपायत्वं प्रसाध्य मया प्रपत्तिरनुष्ठितेति वदन्ति स्म। तद्यथा –

'उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ
स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी ।
उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणा-
वतस्त्वां श्रीरङ्गेशय शरणमव्याजमभजम्।।' (८६)

श्रियःपतिः चिदचितौ सत्तास्थितिनियमनाद्यैः स्वशेषतया स्वीकरोतीति उपनिषत्सम्बन्धिनी वाक् प्रतिपादयति । तस्मात् कारणात् हे श्रीरङ्गेशय उपायत्वमुपेयत्वं च तव स्वरूपं सत्यत्वज्ञानत्वादिवत् उपायोपेयत्वे उभे अपि स्वरूपनिरूपकधर्मावित्यर्थः । करणकलेबर-प्रदानरक्षणनियमनादीनि कुर्वत उपायत्वं सिद्धम् । निरूपाधिक-स्वामिनः समस्तकल्याणगुणात्मकस्यैव एतादृशत्वादुपेयत्वं च सिद्धम्। ज्ञानशक्त्यादिवत् निरूपितस्वरूपविशेषण भूतधर्मो न भवत इत्यर्थः । अत उपायोपेयत्वयोरेव भवतः स्वरूपत्वात् त्वां लोके हि किञ्चित्फलं व्याजीकृत्य कञ्चित्पुरुषं शरणं भजन्ति। व्याजान्तररहित-मुपेयान्तररहितम् उपायमभजम् । त्वामेवोपायत्वेनोपेयत्वेन च स्वीकृतवानस्मीति शरणमभजन्।

**सर्वदेशसर्वकालेषु सर्वविधकैङ्कर्यं वितीर्य रक्षेति कथनम् -**

हे रङ्गनिधे पटुना काकणिकासुवर्णकोट्योः स्थलयोः क्लुप्ता एक-वाटिकेव त्वयैव जन्तुः भवमोक्षणयोः क्रियते । अतः त्वमेव पाहि इति अष्टाशीतितमे प्रार्थयामासुः । भगवान् निरङ्कुशस्वतन्त्रः सर्वशक्ति-सम्पन्नो भवति । 'एष एवासाधुकर्म कारयति तं यमथो निनीषति । एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति' (कौ. ३-९) इत्युक्तरीत्या लीलाविभूत्यां नित्यविभूत्यामप्येकं जीवं विन्यस्य बद्धतुल्यं नित्यतुल्यं च करोतीत्यतो हेतोः त्वमेव सिद्धोपायभूत इति भवतैवोत्पादितां शरणागत्युक्तिं व्याजीकृत्य सर्वत्र सर्वविधकैङ्कर्यम्

वितीर्य मां रक्षेति उपायोपेयत्वयोर्भगवतः स्वरूपत्वे लीलाविभूत्युच्छेद-प्रसङ्ग इत्याशङ्कायां समादधिरे।।

अत्र कुलशेखरदिव्यसूरिमुकुन्दमालाश्रीसूक्तिरनुसन्धेया भवति -

'दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तकप्रकामम् ।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ।।'

(मुकुन्दमाला, ६) इति । एवमेव श्रीवेदान्ताचार्याणां दयाशतक-स्तोत्रप्रार्थनापि स्मरणीयतां भजते।

'नातःपरं किमपि मे त्वयि नाथनीयं
मातः दये मयि कुरुष्व तथा प्रसादम् ।
बद्धादरो वृषगिरिप्रणयी यथासौ
मुक्तानुभूतिरिह दास्यति मे मुकुन्दः ।।' (१०८)

इति भगवतः निरङ्कुशैश्वर्यम् प्रकटयन्ति । बद्धादर इत्यनेन बद्धेषु आदरो यस्य सः इति व्युत्पत्या बद्धजीवेषु कृपां विधेहि इति मुक्तानुभूतिः अनुगृहाणेति च प्रार्थितवन्तः । जीवान् बद्धान् मुक्तान् कर्तुं श्रीमन्नारायण एक एवात्यन्तसमर्थः इति सारांशं व्यक्तीकृतवन्तः।.

**शरणागत्युक्तावप्यधिकारपूर्तिः नास्तीति वदान्ति -**

श्रीमन्तः पराशरभट्टार्याः स्वनैच्यानुसन्धानं भक्तिविनयपूर्वकं प्रकटीकुर्वन्तः हे रङ्गेश

'ज्ञानक्रियाभजनसम्पदकिञ्चनोऽह-
मिच्छाधिकारशकनानुशयानभिज्ञः ।
रङ्गेश पूर्णवृजिनश्शरणं भवेति
मौख्याद्ब्रवीमि मनसा विषयाकुलेन ।।'

(८९) रङ्गेश ज्ञानक्रियाभजनसम्पदकिञ्चनः इच्छाधिकार-शकनानुशयनाभिज्ञः पूर्णवृजिनः आनुकूल्यसङ्कल्पप्रातिकूल्य-परिहृतिरहितः अस्मि शरणागत्यनुष्ठानकल्पानभिज्ञतैव हेतुः मे भवति। अहं मौर्ख्यात् व्यवहरामि विषयाकुलेन मनसा शरणं भवेति ब्रवीमि । अत्र श्रीपराशराणां नैच्यानुसन्धानम् स्वरूपानुगुणमेव ।

'न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमान् त्वच्चरणारविन्दे ।

अकिञ्चनोऽनन्यगतिश्शरण्यः त्वत्पादमूलं शरणं प्रपद्ये।।'
(स्तोत्ररत्नम्, २२) इति श्रीयामुनमुनेः स्तोत्रं स्मारयत्ययं श्लोकः । तदनु पराशराः नवतितमे श्लोके पण्डितपामरविभागहीनं कृत्स्नं जनं वञ्चयामीत्यनुतपन्ति स्म।

'त्वयि सति पुरुषार्थे मत्परे चाहमात्म-
क्षयकरकुहनार्थान् श्रद्दधद्रङ्गचन्द्र ।
जनमखिलमहंयुर्वञ्चयामि त्वदात्म-
प्रतिमभवदनन्यज्ञानिवद्देशिकस्सन् ।।' (९०)

इत्यनेन श्लोकेन हे रङ्गचन्द्र उपायोपेये च त्वयि सति दासजनोऽहम् आत्मक्षयकरान् पुरुषार्थान् विश्वसन् नाम स्वयमपुरुषार्थत्वेऽपि भोग्यताभ्रान्तिविषयान् स्रक्चन्दनवनितादिविषयान् निरतिशयपुरुषार्थत्वेनाध्यवस्यन् अहङ्कारान्वितः देहात्मभ्रमभूयिष्ठः त्वदात्मप्रतिमः भवदनन्यः गुरुर्भवन् इतरोत्तारकात्वाभिमानी सन् पामरानिव पण्डितानपि वञ्चयामि शरणागत्युक्त्यभिनयप्रच्छन्नदुष्कृतो भवामीति भावः श्रीरङ्गराजदेवस्य कृतकपुत्राणां विनयाधिक्यमेव प्रकटयति ।

श्रीवैष्णवसम्प्रदाये दास्यभक्तिः परां कोटिमधिगच्छति । श्रीमद्रामायणे रामदास्यैकजीवनः हनुमान् लङ्कायां

'मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनैकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ।।'

(श्री.रा. ५-३९-३८) इति नैच्यमनुसन्दधाति।

श्रीकाञ्चीपूर्णा अपि देवराजाष्टके स्वनैच्यं

'निन्दिताचारकरणं निवृत्तं कृत्यकर्मणः ।
पापीयासममर्यादं पाहि मां वरद प्रभो ।।'

(देवराजाष्टकम्, ३) इति तृतीये श्लोके व्यजिज्ञपन्।

'वृत्त्या पशुर्नरवपुस्त्वहमीदृशोऽपि
श्रुत्यादिसिद्धनिखिलात्मगुणाश्रयोऽहम् ।
इत्यादरेण कृतिनोऽपि मिथः प्रवक्तु-
रद्यापि वञ्चनपरोऽत्र यतीन्द्र वर्ते।।'

(यतिराजविंशतिः, श्लो. ७) इति वरवरमुनयः भगवद्रामानुजार्यसन्निधौ नैच्यानुसन्धानं प्राकटयन्। इयं च पूर्वाचार्याणां सरणिः चेतनोज्जीवनायैव, न तु तेषां निजस्वभाव इति ज्ञेयम् । अत एव पराशराः नमः इति पदं विवृण्वन्तः स्वनैच्यं प्राकटयन् । तदनु श्रीवत्साङ्कसुताः श्रीमन्तः पराशरभट्टार्याः यद्यपि आत्मक्षयकर-कुहनार्थश्रद्धारूपाकृत्यकरणमात्रपर्याप्तो न भवामि, किन्तु मनोवाक्कायै-रनादिकालप्रवृत्तज्ञानाज्ञानविरचितानन्ताकृत्यकरणकृत्याकरणभगवदप-चारभागवतापचारसह्यापचारनिरतो भवामि। तथापि सर्वापराधसहिष्णोः भवतः क्षमाविषयो भवामि इति वदन्तः,

'अतिक्रामन्नाज्ञां तव विधिनिषेधेषु भवतेऽ-
प्यभिदृह्यन् वाग्धीकृतिभिरपि भक्ताय सततम् ।
अजानन् जानन् वा भवदसहनीयागसि रतः
सहिष्णुत्वाद्रङ्गप्रवण तव माभूवमभरः ।।' (९१)

हे श्रीरङ्गनगररसिक वाङ्मनःस्कायैः जानन् अजानन् वा विधिनिषेधेषु तवाज्ञामतिक्रामन् भवते भक्तायापि अभिदृह्यन् असह्यापचारे च निरतः अहं तव अपराधसहनशीलत्वात् अभरः माभूवम् । द्वौ नञा प्रकृतमर्थं सूचयत इति न्यायाच्च भवतो भर एव भवेयमित्यर्थः । अपराध-सहिष्णुतारूपक्षमागुणविशिष्टस्य तवाकृत्यकरणादिबहुविधापराधविधान-शीलोऽहं क्षन्तव्य एवेति पर्यवासितोऽर्थः । श्रीपराशराणां हृदयमार्गसिंहावलोकनन्यायेन पूर्वोक्तानर्थान् संक्षेपेण प्रतिपादयितु-मारब्धाः भट्टपादाः हे रङ्गजीवित तव भुजसुरविटपिप्रच्छाये सति प्रकुपितभुजगफणानामिव विषयाणां छायामहं भजामि इति भगवते संसारिणां स्वभावं निवेदयामासुः ।

'एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः ।
जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ।।' (९३)

इति संसारिकदुःखव्याकुलजीवसमाजसंरक्षणक्षमायामाकस्मिकश्रियः-पतिकृपायां विद्यमानायां किमिति प्रकुपितभुजगसदृशविषयच्छाया-भजनमित्याशङ्कायां श्रीपराशराः एवं समादधिरे। यथा —

'त्वत्सर्वशक्तेरधिकास्मदादेः कीटस्य शक्तिर्बत रङ्गबन्धो ।
यत्तत्कृपामप्यतिकोशकारन्यायादसौ नश्यति जीवनाशम्।।'

इत्यनेन श्लोकेन हे रङ्गबन्धो अस्मदादेः क्षुद्रजन्तुविशेषस्य शक्तिः सर्वशक्तेः भवतोऽपि अधिका भवति बत। यस्मात् कारणात् अस्मदादिकीटः कोशकारन्यायात् नाम कोशकारनाम कश्चन क्रिमिविशेषः स्ववदनोत्पातितैः तन्तुभिरेव स्ववासस्थानकोशं निर्माय कोशद्वारमपि तन्तुभिरेवान्तर्धाय बहिर्निर्गन्तुमशक्तः तदन्तर्गत एव नश्यति । तन्न्यायात् त्वत्कृपामपि अतिक्रम्य जीवन्नेव नश्यतीत्यर्थः । संसारदुःखे सुखत्वबुद्धेः स्वकल्पितत्वात् कोशकारदृष्टान्तसाङ्गत्यं सुरुचिरमेव । अनेन दृष्टान्तेन श्रीपराशराणां प्रकृतिपरिशीलनं च स्पष्टं ज्ञायते। श्रीपराशराः मया भवदीयदयातिक्रमणमात्रं न कृतम्, क्षमावात्सल्यादिगुणान्तराणामपि विषयत्वमतीत इति विषीदन्ति स्म।

'श्रीरङ्गेश त्वद्गुणानामिवास्म-
द्दोषाणां कः पारदृश्वा यतोऽहम् ।
ओघे मोघादन्यवत्त्वद्गुणानां
तृष्णापूरं वर्षतां नास्मि पात्रम्।।' (९४)

इति श्लोकद्वारा हे श्रीरङ्गेश त्वद्गुणानामिवास्मद्दोषाणां पारदृश्वा क इति प्रश्नमाक्षिप्य उभयेषामपि परिच्छेत्ता न कश्चिद् दृश्यत इति वदन्ति। भवद्गुणा इव मदीयदोषा अपि असंख्याका इति प्रतिपादयन्ति । यस्मात्कारणात् अहं मोघोदन्यवत् नाम ब्रह्मरक्षःप्रभृतीनामासन्न-प्रवाहेऽपि स्वयमवतीर्य पिपासाशमनं कर्तुं न शक्यत । तद्वत् तृष्णापूरं वर्षतां त्वद्गुणानां पात्रं नास्मीति स्वबाधामाविष्कृतवन्तः । तथैव हे श्रीरङ्गशायिन् त्वं कृपया मनुष्यादिषु जायमानः तत्कर्मपाकमुपभुङ्क्षे चेत् कस्य हेतोः कुशलेतराभ्यां भूयः अभिभूयेमहि । केवलकृपया-स्मदाद्याश्रितसंरक्षणायावतीर्य स्वयं तत्फलान्यनुभवतो भवतः क्षमादि-गुणाविषयतायां हेतुरत्युत्कटं दुष्कृतमिति निष्कृष्टार्थः । इतरथा कोसलजनपदचराचरान्तर्भावोऽपि कुतो नाभूदिति भावं 'त्वं

चेन्मनुष्यादिषु जायमानः - - -' इत्यादिश्लोकमुखेन स्व
व्यजिज्ञपन् ।

**श्रीरङ्गनाथस्य दयाप्रवाहवैभवः -**

इत्थमत्युत्कटदुष्कृतोप्युत्कूलाया भवतः क्षमाय
भवेयमिति वदन्तः श्रीरङ्गनाथदयाप्रवाहगतं विशदीकुर्वन्ति
'क्षमा सापराधेऽनुतापिन्युपेया कथं सापराधेऽपि दृप्ते मयि
तथाप्यत्र रङ्गाधिनाथानुतापव्यपायं क्षमेतातिवेला क्षमा ते
इति अनुतापशून्ये मयि ते दयाप्रवाहः कथं प्रादुर्भूयात्
कुर्वन्ति। उत्कूला ते क्षमा मयि अनुतापाभावमपि क्षमेत
प्रत्यक्षितक्षमाविलक्षणलक्षणा लक्ष्मीवल्लभक्षमा पश्चात्त
कञ्चिद्गुणमेव मत्वा प्रवर्ततामिति वदन्ति। दया
वेदान्ताचार्याणामनुभवः श्रीपराशरार्यसूक्ती अनुकरोति । यथा

'नैसर्गिकेण तरसा करुणे नियुक्ता
निम्नेतरेऽपि मयि ते विततिर्यदि स्यात् ।
विस्मापयेत् वृषगिरीश्वरमप्यवार्या
वेलातिलङ्घणदशेव महाम्बुराशेः ।।' (दयाशतके ९

इति उभयोरपि भावसाम्यं मधुरानुभूतिं प्रसादयति । तदनु श्
सम्प्रति सर्वात्मना गुणाभाव एव निरवधिमहिम्नो भग
निष्प्रतिबन्धप्रवृत्तिहेतुरिति वदन्तः -

'बलिभुजि शिशुपाले तादृगागस्करे वा
गुणलवसहवासा त्वत्क्षमा सङ्कुचन्ती ।
मयि गुणपरमाणूदन्तचिन्तानभिज्ञे
विहरतु वरदासौ सर्वदा सार्वभौमी ।।' (९७)

इत्यत्रान्तःपुरापचारपरुषभाषणरूपापराधौ काकासुरे शिशु
गुणलवसहवासात् यथा 'सपित्रा च परित्यक्तः सुरैश्च समह
त्रीन् लोकान् सम्परिक्रम्य तमेव शरणं गतः ।।' (श्री.रा. ५
इत्युक्तरीत्या पित्रादित्यक्तताजन्यपारवश्यप्रयुक्तरामाश्रमप्रवेशः
गुणलवः । शिशुपाले तु प्रतिपरुषभाषणं कृष्णनामोच्चारणं

इति सङ्कोचं प्राप्नुवन्ती असौ त्वत्क्षमा गुणलेशशून्ये पुष्कलापराधेऽपि प्रसर्पणमेव क्षमाया विकासानुकूलमिति हृदयं परमाणुसमानगुणैकदेश-वृत्तान्तविचाररहिते मयि सर्वदा सार्वभौमी विहरतु। अत्यन्तसूक्ष्म-गुणलवप्रसङ्गेनापि सन्त्यक्तचिन्तोऽहमेव काकशिशुपालापेक्षया क्षमायाः पुष्कलो लीलाविषय इति निष्कर्षः परमानन्दमुपजनयति। श्लोकोऽयं भगवद्यामुनमुनेः अधस्तनस्तोत्ररत्नश्लोकमनुकरोति । यथा –

'रघुवर यदभूस्त्वं तादृशो वायसस्य
प्रणत इति दयालुः यस्य चैद्यस्य कृष्ण ।
प्रतिभवमपराद्धुः मुग्धसायुज्यदोऽभूः
वद किमपदमागः तस्य तेऽस्ति क्षमायाः।।' (६३)

अनेन पराशराणां पूर्वाचार्यश्रीसूक्तिविवरणश्रद्धां ज्ञातुं प्रभवामः । अनन्तरं दयाया अपि मदीयगुणहानिरेव विहारहेतुरिति वदन्तः, हे रङ्गमन्दिर दयापरव्यसनहर मम भवव्यथा सुखायते । तस्मात् कारणात् अहं दयातिगः भवामि । तथापि असौ दुःखं सुखयति इति मां दयस्व इति प्रार्थयन्ति। परदुःखासहिष्णुता दयेति लक्षणात् मां दयाविषयं विरचयेति अतिपरुषसंसारव्यसनेऽपि सुखत्वमोहवानहमतीव व्यसनीति परव्यसन-हरा भवदीया दया मयि बहुशो विहरतामिति पराशराणामाशयः भोग्यः एव।

अथ स्वानुभूयमानभवव्यथाभेदं प्रतिपाद्य अत्यन्तहेयस्य मम श्रियः श्रियं भगवन्तं भवन्तमधिगन्तुमास्थाप्यपचार एवेति विज्ञापयन्ति।

'गर्भजन्मजरामृतिक्लेशकर्मषडूर्मिगः
श्वेव देववषट्कृतं त्वां श्रियोऽर्हमकामये ।।'

इत्यस्मिन् श्लोके श्रीपराशराः गर्भजन्मजरामृतिक्लेशकर्माण्येव षडूर्मय इति प्रतिपादयन्तः, तं षडूर्मिं अहं प्राप्तवानिति अहं श्वा सदृश इति देववषट्कृतमिव श्रियः अर्हं त्वामकामये इति दासजनस्य मे दुष्कृतमपचारं क्षमस्वेति प्रार्थयन्ति स्म । अत्र ऊर्मिषट्कपुष्कलतया अतिहेयस्य मम श्रीवल्लभ भगवदनुभवाकांक्षा, शुनः पुरोडाशाशना-शेवात्यन्तानुचितोति भावं व्याजिज्ञपन्। इयं विनयोक्तिरपि डम्बतः

पूर्वाचार्यवचनविडम्बनाय प्रवृत्ता, ततोऽपि सांसारिकसुखानुभव एवातिहेयस्य ममोचित इति सदृष्टान्तमाह - यथा हे रङ्गनिधे पूर्वपुंसः पराङ्कुशपरकालनाथयामुनभाष्यकारप्रभृतीन् पूर्वाचार्यान् अनुकृत्य शुना इव अमुष्मात् विनयडम्बतः श्वेव देववषट्कृतं श्रियोऽर्हमकामये इत्युक्ता डम्बोक्तिः पूर्वाचार्यविनयवचनविडम्बनार्था इति शुन इव स्थितस्य ममातिहेयस्य यथाधिकारफलप्रदानशीलभवत्प्रदत्तायाः सांसारिकसम्पदः अनुभवः श्रेष्ठं कृत्यमिति अहृदय विनयवचनमप्यपचार एवेति निवेदयामासुः ।

एवं श्रीमन्तः भट्टपादाः स्वकीयानात्मगुणाननुसन्धाय शरणागत्युक्तिमात्रेण संरक्षणदीक्षिते भवत्यपि विश्वासलेशाभावात् स्वतन्त्रो भवामीति वदन्ति स्म।

'सकृत्प्रपन्नाय तवाहमस्मीत्यायाचते चाभयदीक्षमाणम्।
त्वामप्यपास्याहमहं भवामि रङ्गेश विश्रम्भविवेकरेकात्।।'

(१०१) हे रङ्गेश सकृत्प्रपन्नाय तवाहमस्मीति आयाचते च अभयदीक्षमाणं त्वामपि विश्वासज्ञानस्याभावात् अहंताविशिष्टो भवामि। स्वतन्त्रो भवामि, अहमेव मम रक्षक इत्यध्यवस्यामीति यावत् । 'सकृदेव प्रपन्नाय तवास्मीति च याचते' इति शरण्यवचनेऽपि चकारप्रयोगादधिकारिद्वयमभिप्रेतम्।

एवं महाविश्वासाभावात् स्वयमननुष्ठितप्रपदनस्यापि मम पूर्वाचार्यैः कृपया स्वसम्बन्धिनोऽपि क्रोडीकृत्य कृतं प्रपदनं मयापि तदुक्त्यभिनयेन विरचितं शरणवचनमपि ससाक्षिकं परीक्ष्य रक्षेति प्रार्थयन्ति।

'तव भरोऽहमकारिषि धार्मिकैः शरणामित्यपि वाचमुदीरयम्।
इति ससाक्षिकयन्त्रिदमद्य मां करु भरं तव रङ्गधुरन्धर ।।'

(१०२) हे रङ्गधुरन्धर परमदयालुभिर्देशिकैस्तव भरः कृतोऽस्मि। शरणमिति वाचमपि अवोचम्, धार्मिकैस्तव भरत्वेन करणमेव फलायालम् । उक्तद्वयं साक्षिभिस्सह परामृशन् पुष्कलप्रपत्तिचर्यान् पूर्वाचार्यानिव तदीयं तदुक्तशरणागत्यनुवादकं च मां रक्ष्यत्वकक्ष्यायां

विनिक्षिपेदिति भावः रङ्गराजतनयानां श्रीरङ्गेश्वरपुरोहितानां शोभाकर एव ।

श्रीमन्तः यामुनाचार्याः स्वकीये स्तोत्ररत्ने ६५ श्लोके –

'अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिमात्मवन्तम्।

पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा।।'

इति प्रार्थितवन्तः । अतः पूर्वाचार्याणां परम्परां दृष्ट्वा तेषां पादसम्बन्धी अयं दासः इति मत्वा मां रक्षेत्यभिप्रायः श्रीवैष्णवसम्प्रदायानुगुण एव ।

अथ श्रीपराशराः श्रीरङ्गराजस्तवसमापनवेलायां निन्दास्तुतिं कुर्वन्ति स्म। सम्प्रतिपन्नसंरक्षणोपयोगीनि दयाक्षान्त्यौदार्याणि कृत्स्न-जगदुपादानकारणस्य समाश्रितदोषानभिज्ञस्य अर्थिजनसात्कृतसम्पदो भवतो न सन्त्येवेति निन्दया स्तुवन्ति । श्रीपराशरभट्टार्याः श्रीरङ्गनाथस्य दत्तपुत्राः भवन्ति । तेषां भगवति स्वातन्त्र्यम् अत्याश्चर्यं जनयति।

'दयान्येषां दुःखाप्रसहनमनन्योऽसि सकलैः

दयालुस्त्वं नातः प्रणमदपराधानविदुषः ।

क्षमा ते रङ्गेन्दो भवति नतरां नाथ नतमां

तवौदार्यं यस्मात्तव विभवमर्थिस्वममथाः ।।' (१०३)

हे रङ्गेन्दो परदुःखासहिष्णुत्वं हि दयालक्षणमिति वदन्ति । त्वं तु सकलैर्जनैरभिन्नोऽसि । प्रलयदशायां 'सदेव सोम्येदमग्र आसीत्' (छा. ६-२-१) इति सूक्ष्मचिदचिद्विशिष्टस्यैव भवतो 'बहु स्यामिति' सङ्कल्प-पूर्वकं स्थूलचिदचिद्विशिष्टतया सृष्टिकाले परिणामात् 'सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदं सर्वमिति' (छा. ३-१४-१) श्रुतिस्सकलानन्यत्वं प्रतिपादयतीति भावः । अतः सकलैरनन्यत्वात् त्वं दयालुर्न भवसि । प्रणमदपराधान् अनभिज्ञस्य दोषादर्शित्वरूपवात्सल्यवतः क्षमा सुतरां नास्तीत्यर्थः । अपराधज्ञाने सति किल सोढव्यम् । क्षान्तिर्वात्सल्याभि-भूतेति भावः । यस्मात् कारणात् तव विभवम् अर्थिनामेव शेषभूतम् अमंस्थाः अतो हेतोः तव औदार्यगुणः अत्यन्तं नास्ति इति निन्दारूपेण स्तुवन्ति । स्वकीयस्य स्वस्य परस्वत्वापादनं ह्यौदार्यमिति भावः ।

'जिज्ञासुरर्थार्थी' इत्यारभ्य 'उदाराः सर्व एवैते' (भ.गी. ७-१८) इति प्रतिगृहीतृषूदारपदं प्रयुञ्जानस्य भगवतोऽभिप्रायानुगुण्येन तव विभवमर्थिस्वममंथा इत्युक्तम् । समाश्रितसंरक्षणे प्रधानसाधनत्वात् दयायाः प्राथम्यम् तदनुसारित्वं क्षमाया लक्षयितुं तस्यास्तदानन्तर्यम् । औदार्यस्य दयाफलत्वात् अन्ते निवेश इति क्रमः दयायाः सापराधमपि संरक्षतीति निष्कृष्टोऽभिप्रायः चमत्कारपूर्ण रसघनः।

इत्थं उत्तरशतकद्वारा द्वयमन्त्रस्योत्तरखण्डवाक्यं विवृण्वन्तः श्रीमते नारायणाय नमः इति प्रत्येकं पदत्रयाणां विशेषार्थं विज्ञापितवन्तः।

एवं भगवतो गुणाधिक्यं प्रतिपाद्य प्रकृतं कैङ्कर्यप्रार्थनं परिसमापयन्ति।

'गुणतुङ्गतया तव रङ्गपते भृशनिम्नमिमं जनमुन्नमय ।
यदपेक्ष्यमपेक्षितुरस्य हि तत्परिपूरणमीशितुरीश्वरता ।।'

(१०४) अपूर्वोऽयं श्लोकः मधुरपदयुक्तः भट्टपराशराणां कवनसामर्थ्यमुदाहरति। हे रङ्गपते तव गुणतुङ्गतया दयाक्षमौदार्य-गुणैरुन्नततया अत्यन्तनीचम् इमं जनं संसारिणं मामुन्नतं कुरु। नित्यमुक्ततुल्यं त्वच्चरणपरिचरणयुक्तं विधत्स्वेति प्रार्थयन्ति स्म । उक्तमर्थमर्थान्तरन्यासेन दृढयति। अपेक्षमाणस्य फलमभिलषितः यदपेक्ष्यम् अपेक्षितुरपेक्षितपरिपूरणं हि ईश्वरस्य ईश्वरता भवति। अपेक्षितपरिपूरणकारणत्वात् ईश्वरत्वस्य कारणे कार्योपचारादी-श्वरत्वतत्कार्यपरिपूरणयोरभेदोक्तिः। समस्तकल्याणगुणगणपरिपूर्णस्य सर्वेश्वरस्य भवतोऽतिनीचाय भवद्दास्याभिलाषिणे मह्यमभिलषित-प्रदानमेव उचितमिति प्रार्थयन्ति स्म। अस्मिन् विषये श्रीपराशर-भट्टार्याणां पितृपादानां श्रीकूरेशमिश्राणां वैकुण्ठस्तवश्लोकौ स्मरणीयौ भवतः । यथा —

'ऐश्वर्यवीर्यकरुणागरिमक्षमाद्याः स्वामित्वकारणसुहृत्त्वमथो विशेषात्।
सर्वे गुणास्सविषयास्तव मामपारघोराघपूर्णमगतिं निहतं समेत्य।।'

'त्वत्पादसंश्रयणहेतुषु साधिकारा-

नुद्युञ्जतश्चरितकृत्स्नविधींश्च तांस्तान् ।
त्वं रक्षसीति महिमा न तवालमेष
मां चेदनीदृशमनन्यगतिं न रक्षेः ।।' ( श्लो. ९९,१००)

अथ सर्वेश्वरस्य मम गुणतुङ्गस्यापि कर्मज्ञानभक्तिप्रपत्तियुक्तानेव संरक्षणीयमिति सर्वमुक्तिप्रसङ्गपरिहाराय सङ्कल्पितत्वादेतेष्वन्यतमानुष्ठानाभावयुक्ते भवते कथमभिलषितदानमुचितमिति भगवदभिप्रायमाशङ्क्य, तादृशोपायलेशशून्याय मह्यमपि तथा विधमनोरथप्रदानं भवतो गुणातिशयावहमिति श्रीपराशरभट्टार्याः विज्ञापयन्तः श्रीरङ्गराजस्तवोत्तरशतकसमापनं मङ्गलरूपेणारचयामासुः।

**श्रीरङ्गराजस्तवे उत्तरशतकस्य समापने मङ्गलश्लोकः -**

उत्तरशतके द्वयार्थोत्तरखण्डविवरणं परिसमापयन्तः श्रीपराशरभट्टार्याः पञ्चोत्तरशतश्लोकं मङ्गलरूपेण विरच्य भगवते श्रीरङ्गनाथाय लक्ष्मीविशिष्टाय नित्यसूरिबृन्दसंसेवितपादारविन्दाय उपायोपेयत्वरूपेण कैङ्कैर्येण समर्पयन्ति स्म।

'त्वं मीनपानीयनयेन कर्मधीभक्तिवैराग्यजुषो बिभर्षि ।
रङ्गेश मां पासि मितंपचं यत् पानीयशालं मरुभूषु तत्स्यात् ।।'

(१०५)हे रङ्गेश मम नाथ त्वं कर्मयोगज्ञानयोगभक्तियोगप्रपत्त्याख्यचतुर्विधोपायजुषान् बिभर्षि । (अत्र पारिशेषाद्वैराग्यशब्देन प्रपत्तिरेवोच्यते।) मीनपानीयनयेन नाम जलमध्यचरमत्स्यानां पुनरपि जलप्रदानवत् कर्मादीनां स्वत एव भगवत्कैङ्कर्यरूपत्वात्तदनुष्ठातृणां पुनः कैङ्कर्यप्रदानं मीनपानीयतुल्यं भवति इति वदन्तः कर्मादिचतुष्टयशून्यमपि ममाकांक्षितप्रदानेन रक्षसीति इति यत् तत् निर्जलभूमिषु पानीयशालं स्यात् इति अनुष्ठितसाधनरक्षणापेक्षयाननुष्ठितसाधनरक्षणमेव भवदीयदयादिगुणानामौन्नत्यावहं भवतीति शुभसमाप्तिमारचयन्।।

श्रीरङ्गनाथो जयतु ।

श्रीमते रामानुजाय नमः ।।

**श्रीरङ्गराजस्तवस्य समीक्षायाम् उत्तरशतकनिगमनम् -**

श्रीमन्तः श्रीकूरेशतनयाः ज्ञानवैराग्यधनाः श्रीमद्रामानुजाचार्याज्ञापरिपालनायैव तृणीकृतजीवनाः द्वयमर्थानुसन्धानेन सह सदैवं वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्वेति शरणागतिगद्ये प्रमाण्यमनुसरन्तः द्वयमन्त्रविवरणायैव बद्धश्रद्धाः भूत्वा,

श्रीमान् पराशरगुरूः श्रुतिमूर्धसिद्धान्
अर्थाननर्थशतदन्तुरमन्दधीभ्यः ।
श्रीरङ्गराजविषयस्तवकैतवेन
प्राचीकरत् प्रबलया कृपया स्वयैव ।।'

(श्रीरङ्गराजस्तवव्याख्यानारम्भे मङ्गळश्लोकः, ४ ) इति,

'श्रीरम्ब तेन प्रथितप्रतीतश्रीरङ्गराजस्तव भावजातम् ।
धीसंभृतानां विरचम्य भोग्यं श्रीशञ्च सन्तुष्टधियं तनोमि ।।'

(२) इत्यादिरूपेण सुश्लाघितचरिताश्चाभवन्। श्रीरङ्गराजस्तवनाम्नानितरसाध्यं शतकद्वयविशिष्टं श्रीविशिष्टाद्वैतसिद्धान्तरहस्यजातं महाकाव्यं विरचयामासुः । प्रतिपद्यं सम्प्रदायार्थविशिष्टगुणयुतं वेदवेदान्तपुराणवाक्यप्रामाण्यविलसितं चकास्ति।

पूर्वशतकं द्वयमन्त्रस्य पूर्वखण्डं ज्ञापयति । उत्तरवाक्यं उत्तरखण्डं ज्ञापयति। पूर्ववाक्येन श्रीमन्नारायणचरणौ शरणं प्रपद्ये इत्यनेन आश्रयणद्वारम्, आश्रयणीयं वस्तु, तदुपायत्वं, तद्वरणञ्च प्रतिपादितम् । इत्थं पूर्वखण्डं समस्तमर्थजातं श्रीरङ्गनाथमुखेनैव प्रादर्श्ययन्।

अनन्तरम् उत्तरवाक्येन उपायस्वीकारसमनन्तरभावि उपायफलभूतपुरुषार्थविशेषप्रार्थनागर्भं फलंतादधीन्यप्रयुक्तस्वनिर्भरत्वानुसन्धानं प्रतिपाद्यते । तथोक्तम् —

'तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता ।
केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते ।।'

लक्ष्मीतन्त्रम्, श्लो. ९७) इति,

'यद्येन कामकामेन न साध्यं साधनान्तरैः ।
मुमुक्षुणा यत्साङ्ख्येन योगेन च भक्तितः ।।
प्राप्यते परमं धाम यतो नावर्तते पुनः ।
तेन तेनाप्यते तत्तन्न्यासेनैव महामुने ।
परमात्मा च तेनैव साध्यते पुरुषोत्तमः ।।'
(अहिर्बुध्न्यसंहिता, ३९-२६)

इति शरणागतेः सर्वफलहेतुत्वं प्रतिपादितमासीत् । तत्सर्वं च श्रीरङ्गराजस्तवोत्तरशतके श्रीपराशरभट्टार्याः प्रादर्शयन् ।

'चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ।।' (भ.गी. ७-१६)

इति भक्तेरधिकारिचातुर्विध्यमुक्तं किल ।

'तावदार्तिस्तथा वाञ्छा तावान् मोहस्तथासुखम् ।
यावन्नायाति शरणं त्वामशेषाघनाशनम् ।।'

(वि. पु. १-९-८६) इति प्रपत्तेरपि तथाविधत्वमुक्तम् । आर्तादीनां चतुर्णां निवर्तनीयाकाराः आर्तिवाञ्छामोहासुखशब्दैरुच्यन्ते । एतेषामधिकारिणां भगवदाश्रयण-सामान्येऽपि ज्ञानी परमपुरुषार्थाभिलाषित्वादधिकतमः ।

'उदारास्सर्व एवैते ज्ञानीत्वात्मैव मे मतम् ।
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।।'

इत्युक्तत्वात् अन्ये त्रयस्तदवराः, ऐश्वर्यकैवल्यरूपावरपुरुषार्थाभिलाषित्वात् । एतत्सर्वं स्पष्टमुक्तमन्यत्रापि,

'चतुर्विधा मम जना भक्ता एव हि ते श्रुताः ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी चेति पृथक् पृथक् ।।
तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः ।
अहमेव गतिस्तेषां निराशीः कर्मकारिणाम् ।।
ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः ।
सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक् ।।'
(म. भा. मोक्षधर्म. ३८२-३३ )

तस्मात् फलतादधीन्यप्रतिपत्तिरूपं स्वनिर्भर-त्वानुसन्धानमुत्तरवाक्यस्य तात्पर्यं भवति । तत्सर्वमुत्तरशतके प्रतिपादितवन्तः। यद्यपि वाक्यद्वयं वरणसमर्पणात्मकत्वेन प्रपदनाकारवाचकतया सर्वफलसाधारणम्, तथापि समर्पणवाचकस्योत्तरवाक्यस्य सर्वात्मना भगवदर्थवाचकतया पुरुषार्थविशेषप्रतिपादकत्वं शब्दोद्भावितम् । तत्र तादर्थ्यफल-किञ्चित्कारप्रतिसम्बन्धिपूर्तिः । प्रथमपादेन प्रतिपाद्यते श्रीमते इति अत्रापि श्रीशब्दस्य पूर्ववत् कर्तरि कर्मणि च व्युत्पत्त्या श्रयन्ती वैष्णवं भावं सा श्रीरिति निगद्यते । (अहिर्बुध्न्यसंहितोक्तप्रकारेण) इति सर्वदा भगवदाश्रयणस्वाभाव्यात् तत्स्वरूपरूपगुणविभवादिभोग्यता इति अतिशयपूर्वकत्वं श्रीयते चाखिलैर्नित्यम् इति स्वव्यतिरिक्तसमस्तात्म-वर्गैः प्राप्यत्वेनाश्रयणीयत्वं चावगम्यते । निखिलशेषभूतस्य चेतनस्य स्वरूपानुरूपं प्राप्यं मिथुनमेवेत्युक्तं स्यात् । तस्मात् लक्ष्मीविशिष्टस्यैव परमप्राप्यत्वम् । एवं लक्ष्मीविशिष्टस्य प्राप्यस्य भगवतः स्वरूपरूप-गुणविभवाद्यपरिच्छित्तिः नारायणपदेन प्रतिपाद्यते। तत्र नारशब्दः गुण-विग्रहविभूतिनित्यत्वैकरूपत्वासङ्ख्येयत्वापरिमितत्ववाचकः। अयन-शब्दः तदाश्रयस्वरूपापरिच्छित्तिवाचकः । एवं स्वरूपरूपगुणविभवादि-वाचकस्य नारायणपदस्य विशेषणतया श्रीमत्पदनिर्देशात् स्वरूपादिषु सर्वेषु प्रतिपन्नमनवधिकातिशयवैलक्षण्यं सर्वं लक्ष्मीविशिष्टत्वप्रयुक्त-मित्यवगन्तव्यमिति।

'श्रीमच्छब्दात् परयुक्तं नारायण इतीष्यते ।
तत्परं चरणौशब्दस्तत्परं शरणं तथा ।।
प्रपद्ये तत्परं युक्तं नमश्शब्दमतः परम् ।
श्रीमते च तथा युक्तं परं नारायणाय च ।।'

इति पदान्तरमुत्तरखण्डादौ नमश्शब्द इति मन्त्रोद्धार उच्यते । ऋष्यादिकं च 'अन्तर्यामी ऋषिस्तस्य देवी गायत्र्युदाहृतम् ।
छन्दस्तु देवता विष्णुः परमात्मा सनातनः ।।
श्रीमन्नारायणः साक्षात् परं ब्रह्म परात्परः ।
आनन्दचित्स्वरूपी च सर्वव्यापी च कथ्यते ।।'

एतत्सर्वाधिकारपक्षे त्वनपेक्षितमित्युक्तम् ।

'सर्वोपायविहीनानां मदालम्बितचेतसाम् ।
निर्मितं सर्वजातीनां रोगिणामौषधं यथा ।।
देशकालविभागश्च न नक्षत्रपरीक्षम् ।
केवलं जपमात्रेण मामेवाप्नोत्यसंशयः ।।'

इति वचनाच्च अयमेव सर्वाधिकारपक्षः पूर्वाचार्यैः परिगृहीत
निरतिशयमाहात्म्यमिदं मन्त्रशरीरं वाक्यद्वयात्मकं कठव
अधीयते - अष्टाक्षरमहामन्त्रस्तु वैदिकमन्त्रः । चरमश्लोकः
प्रकाशते । द्वयमन्त्रस्तु कुत्रापि वा वेदभागे नोपलभ्यते । अवै
मन्त्र इति मितज्ञानामभिप्रायः । किन्तु द्वयमन्त्रोऽयं द्वय
प्रतिपादितः । द्वयोपनिषत्तु कठोपनिषदि प्रतिपादिता । 
तैत्तिरीये शिक्षावल्ली ब्रह्मवल्ली भृगुवल्लीत्यादयो विराजन
कठोपनिषदि मन्त्रोऽयं श्रूयते। पठनपाठनेष्वदृश्यमान
खिलश्रुतिरूपेणाभिधीयते । विषयोऽयं वेदान्ताचार्यवर्येण र
सारनाम्नि द्रविडग्रन्थे प्रतिपादितः ।

द्वयमन्त्रे पूर्ववाक्यं तु उपायानुष्ठानपरं भवति । उत्त
मोक्षरूपफलांशप्रार्थनापरं भवत्येव । मोक्षरूपं फ
अनिष्टनिवृत्तिपूर्वकेष्टप्राप्तिरूपं भवेदिति नमश्शब्दार्थी
अनिष्टनिवृत्तिप्रार्थनां च निरूपितवन्तः ।

इत्थं श्रीमन्तः पराशरभट्टपादाः श्रीरङ्गराजस्तवे उ
द्वयमन्त्रोत्तरवाक्यं विवृण्वन्तः श्रीरङ्गराजस्यैव सर्वस्मात
विस्तरेण प्रतिपादयामासुः । तत्र वेदार्थनिर्णयः वेदबाह्यमतनि
१२ पर्यन्तं) वेदार्थावगतसाधनानि (१४-१६) भगवद्गुणवर्णनम्
जगत्सृष्टिप्रकारः चेतनसंरक्षणम् (२७-४०) दयाकार्यम्
निरङ्कुशस्वातन्त्र्यम्, भगवत्याः हृदयोल्लासः, अवतारप्रयोज
४८) विभवावतारदशावतारवैभवम्, अर्चावतारसौलभ्यम्
अधिकारिस्वरूपम् (८५-८९) स्वनैच्यानुसन्धानम् (९०-९१)
लोकनक्षमाप्रार्थना, शगणागतिः भगवत्कैङ्कर्यप्रार्थनम्, वि

अनात्मगुणानुसन्धानम्, पूर्वाचार्यसम्बन्धिनोऽपि क्रोडीकृत्य कृतं प्रतिपादनं, भगवतः श्रीरङ्गराजस्य गुणाधिक्यं सकलविध-कैङ्कर्यप्रार्थनं, श्रीमते नारायणाय नमः इति उत्तरखण्डवाक्यं वेदप्रामाण्यैः द्रविडवेदसूक्तिभिः श्रीरामायण-महाभारत-भागवतादि-पुराणेतिहासैः पूर्वाचार्यश्रीसूक्तिशतसहस्रैः, तर्कव्याकरण-साहित्यविद्या-चमत्कारैः रमणीयार्थप्रतिपादकशब्दगुम्फनैः मधुमयछन्दोविचितिभिः, प्रतिपद्यं प्रतिपदं प्रत्यक्षरं साभिप्रायरूपं भक्तिरसार्द्रभावं च श्रीरङ्गराजस्यैव दयाप्रभावात् स्वाचार्याणां कृपाकटाक्षेण च श्रीविशिष्टाद्वैतसिद्धान्तं चिदचिद्विशिष्टं श्रीमन्नारायणतत्त्वं लोकोत्तरा-ह्लादेन श्रीवैष्णवतत्त्वं भगवद्रामानुजदर्शनं परमकारुणिकेन चेतसा श्रीरङ्गराजस्तवनाम्ना शरणागतिमहाप्रबन्धम् अवतारयामासुः। भगवते श्रीरङ्गनाथाय नित्यकैङ्कर्यमेवाभिलषितवन्तः शतकद्वयं समर्पयामासुः।।

'प्रमाणनखनिर्भिन्नवादिमत्तेभमस्तकः ।
राजते निगमान् गर्जन् श्रीपराशरकेसरी ।।'

इति वेदबाह्यकुदृष्टिमतखण्डनं सप्रमाणं कृत्वा श्रीरामानुजदर्शन-स्थापकसार्वभौमपदवीमध्यतिष्ठन् ।।

**षष्ठः महाप्राकारः समाप्तः ।।**

## सप्तमः प्राकारः ॥

भूमिका -

श्रीनिवासपरब्रह्मणः निर्हेतुककृपाविशेषात् श्रीपराशरभट्टार्यैः प्रणीतस्य श्रीरङ्गराजस्तवस्याध्ययनलाभो मे समुपलब्धः। आचार्याणां कटाक्षविशेषेण श्रीपराशरभट्टार्याणां महिम्ना च सप्तप्राकारभूयिष्टं श्रीरङ्गराजस्तवस्य समीक्षात्मकाध्ययनं कर्म प्रवृत्तमासीत् । भगवान् श्रीरङ्गनाथ एवात्र कर्म स्वयमेव कारयति । नाहं कर्ता, भगवतो बलेन भगवतो वीर्येण भागवतमङ्गळाशासनैश्च सम्प्रति सप्तमप्राकारे प्रविशामः ।

भगवान् श्रीनिवासपरब्रह्म सप्तगिरिनिलयो भूत्वा सप्तकाण्डात्मकवेदस्वरूपः सप्तस्वरैः सप्तर्षिकृतदिव्यस्तोत्रैर्विराजमानः आनन्दनिलयविमाने स्थित्वा चराचरं विश्वं पालयति ।

एवमेव भूलोकवैकुण्ठनाथः भगवान् श्रीरङ्गनाथः सप्तप्राकारमध्यस्थः कावेरीलहरीभिः संसेवितपादद्वन्द्वः, श्रुतिस्मृति-पुराणसाक्षिभूतः देवनरतिर्यग्जडादीन् कृपयानुगृह्णन् दिव्यसूरिभिः परमयोगिभिः पूर्वाचार्यैः ज्ञानभक्तिवैराग्यजलधिभिः संस्तूयमाना-र्चावतारकल्याणगुणगणमण्डितः श्रीरङ्गमधिशेते । अहो भाग्यमहो भाग्यं मांसचक्षुषामस्माकम् । सप्तप्राकारमध्यस्थः भगवान् श्रीरङ्गनाथः नारायणः —

'स्तव्यः स्तवः प्रियस्स्तोत्रं स्तुतः स्तोता रणप्रियः'

(श्रीवि. स. ७३) इति विष्णुसहस्रनामसु भीष्मपितामहेन सङ्कीर्तितः आसीत् । अत्रभवान् श्रीपराशरभट्टाः श्रीविष्णुसहस्रनामस्तोत्रस्य भगवद्गुणदर्पणाख्यां व्याख्यां श्रीरङ्गनाथाय समर्पितवन्तः । तत्र स्तव्य इति नाम्नः—अनध्यारोप्यमहामङ्गळनित्यनिरवधिकनिरवद्यगुणो नामसहस्रव्यपदेश्यः पतिरेव स्तुतिमर्हति । न तु विपरीतगुणो

देवतान्तरादि इति, यथाकथञ्चित् यया कयाचित् भाषया येन केनापि तेजस्करतिरस्कारी वा गुणसंकीर्तनाभिमानेन क्रियमाणस्तवः प्रियतमोऽस्येति प्रियस्तवः इति, स्वस्तोत्रमपि प्रसन्नेनानेन करणभूतेन निष्पद्यत इति, सहस्रफणत्रयीमयादिभिः सूरिभिरनन्तैः ब्रह्मादिभिः अस्मदादिभिश्चाविशेषेणानवधौ काले तत्तदभिलषितसिद्धये स्तुत इति; यथा 'अशेषदेवेशनरेश्वरेश्वरैस्सदा स्तुतं यच्चरितं महाद्भुतम्' इति 'धाता पुरस्ताद्यमुदाजहार शक्रः स विद्वान् प्रदिशश्चतस्रः' इति, अस्मदादिसर्वस्तुतत्वं प्रदिशश्चतस्र इति, 'यं स्तुवन् स्तव्यतामेति वन्दमानश्च वन्द्यताम्' इति व्याख्यामनुजग्रुः । अतः स एव कीर्तनीय इति कृत्वा श्रीरङ्गनाथमेव वारं वारं भावयन्तः श्रीरङ्गराज-स्तवमाविश्चक्रुः । एवमेव -

'सहस्रार्चिः सहस्रजिह्वः सप्तैधाः सप्तवाहनः'

इत्यत्र व्याख्यानावसरे, तथाग्निजिह्वा देवाप्यायकाहुतिग्रहणवहनाधि-काराः कालीकरालीप्रभृतयः, सप्तास्येति सप्तजिह्वः, तद्वत् देवानां च हुतभुक् महेश्वरः ।

'मन्त्रपूतं यदादाय हुतमाज्यपुरस्सरम् ।
ब्रह्माण्डभुवनं सर्वं सन्तर्पयति सर्वदा ।।'

इति, इन्धनानि पाकहविस्सोमसंस्थानि प्रत्येकं सप्तसंख्यानीष्टा-पूर्तरूपाणि सप्तवानस्पत्यास्समिधोऽस्येति सप्तैधा इति, तत्प्रकाशक-गायत्र्यादिछन्दस्कवैदिकमन्त्राभिमानीनि रविरथधुर्याणि सप्त वाहना-न्यस्येति सप्तवाहनः, यथाम्नायते सप्त प्राणाः प्रभवन्ति इत्यादि-गुहाशयानिहितास्सप्त इत्युक्तम् । सप्तवायुस्कन्धान् वहतीति वा ।

'विश्वेश प्रणशक्तेर्वै वाय्वाख्यमधिदैवतम् ।
जगत्सन्धारकं चैव नानास्कन्धात्मना तु वै ।।
एते भगवदारामाः तिष्ठन्त्यस्मिन् जगत्त्रये ।'

(श्रीपौष्करसंहिता) इति व्याख्यां चानुगृहीतवन्तः । अत एव सप्तप्राकाराः भगवदारामा भवन्तु इति धिया सप्तप्राकारमध्यस्थस्य भगवतः श्रीरङ्गराजस्य स्तवस्यास्याध्ययनवेलायां सप्त प्राकाराः

शोभाकरा मङ्गळावहाश्च भवेयुरिति कृत्वा इमे सप्तसंख्याका विभागाः प्राकारात्मना विभक्ताः । (तत्रायं प्राकारः सप्तमः निर्मीयते।) भगवतोऽनन्तकोटिब्रह्माण्डनायकस्य सप्तप्राकारनिर्माणचेष्टा बालिशैव भवेत् । तथापि

'युष्मत्पादसरोरुहान्तररजस्स्याम त्वमम्बा पिता
सर्वं च त्वमसि त्वमेव भवनस्स्वीकुर्वकस्मात् कृपाम् ।।'

(श्रीगु.र.६१) इति श्रीपराशरभट्टार्यश्रीगुणरत्नकोशश्रीसूक्तिस्तन्यबलेन महान्तं साहसमहमाचचार । अतः सप्तसु प्राकारेषु स एव सप्तप्राकाराधिनाथः भागवतहृदयान्तरङ्गः श्रीरङ्गनाथः मङ्गलानि तरङ्गयति इति विश्वसिमि ।

## उपलब्धाः श्रीरङ्गराजस्तवदिव्यकोशाः ।

श्रीरङ्गराजस्तवस्य उत्तरशतकारम्भवेलायां प्रथमश्लोके श्रीमन्तः पराशरभट्टपादाः

'हर्तुं तमस्सदसती च विवेक्तुमीशो
मानं प्रदीपमिव कारुणिको ददाति ।'

कारुणिकः श्रीङ्गनाथः तमः हर्तुं सदसती च विवेक्तुं, प्रमाणं श्रुतिं - ग्रन्थजातं, प्रदीपमिव ददातीत्यभिप्रायं प्रकटीचक्रुः । तच्च सत्यमेव । विना भगवदनुग्रहविशेषं कथं वा भगवत्तत्त्वज्ञानस्योत्पत्तिः सिद्ध्येत् इति विचार्यमाणे स चानुग्रहः कदाचित् आचार्यकटाक्षेणैव, कदाचित् तेषां श्रीसूक्तिसौलभ्येन, शास्त्राध्ययनद्वारा च संभवत्येव । तानि च शास्त्राणि, परमया कृपया तैरेव ग्रथितानि । कालप्रवाहे जीवनदीरूपेण चेतनान् उज्जीवन्त्येव ।

इत्थं श्रीपराशरभट्टार्यग्रन्था अपि सौभाग्यवशात् समुपलभ्यमाना भुवमलञ्चक्रुः । उपलब्धेष्वपि श्रीरङ्गराजस्तवव्याख्याग्रन्थेषु बहवो विषयाः दृष्टिपथमुपागताः । तत्र उपलब्धग्रन्थानां पत्रिकाणां च परिचयोऽत्र दीयते ।

**प्रथमग्रन्थः --**

श्रीवत्साङ्कतनयरत्नश्रीरङ्गेशपुरोहितश्रीपराशरभट्टारकप्रणीतः संसृतिचक्रबंभ्रम्यमाणचेतनसन्ततसंरक्षणविचक्षणःश्रीरङ्गराजस्तवाख्यः प्रबन्धः श्रीवेङ्कटाचार्यविरचितव्याख्यासहितः, १८७९ संवत्सरे चेन्नपुरीस्थितश्रीनिकेतनमुद्राक्षरशालायां मुद्रितः, १२९ पृष्टात्मकः, स्पर्शासहिष्णुः उपलब्धः ॥

(ग्रन्थपरिसमाप्तौ -- इति श्रीमदात्रेयगोत्रभूषायमाण-शेषाचलाचार्यपौत्रेण श्रीरामानुजगुरुवरसूनुना श्रीवेङ्कटनिवासदासेन विरचिता श्रीरङ्गराजस्तवव्याख्या परिसमाप्ता इति स्पष्टमुल्लिखमस्ति ।)

**द्वितीयग्रन्थः --**
श्रीपराशरभट्टार्यविरचितस्य श्रीरङ्गराजस्तवः, गोपालाचार्यव्याख्या-सहितः ।
Srirangarajastava of Sri Parasara Bhattar with a Sanskrit commentary by A.V.Gopoalacharya, Trichino poly. Srinivasa Press, Tiruvadi, 1934.
अयं ग्रन्थः ललितमधुरपदभूयिष्ठव्याख्यासमेतः १४४ पृष्टात्मकः देवनागरिलिपियुक्तः विराजते । परं तु पूर्वशतकमात्रमेवोपलब्धः । उत्तरशतकस्य व्याख्या नोपलब्धा । केचन पूर्वशतकमेव ग्रन्थकर्त्रा प्रकाशितमिति वदन्ति । उत्तरशतकस्य व्याख्या विरचिता वा न वेत्यत्र नास्ति निश्चितोऽभिप्रायः ।

**तृतीयग्रन्थः --**
श्रीरङ्गराजस्तवः, गर्गरामानुजाचार्यप्रणीतव्याख्यासहितः, मद्रपुरी-सर्वकारताळपत्रग्रन्थालये उपलभ्यमानो विराजते ।

**चतुर्थग्रन्थः --**
श्रीरङ्गराजस्तवस्य मणिप्रवाळरूपव्याख्यया आन्ध्रानुवादेन च सहितः, श्रीकाञ्चीजगदाचार्यसिंहासनाधिपतीनां प्रतिवादिभयङ्कर-अण्णङ्गरा-चार्यस्वामिपादानां श्रीरामानुजपत्रिकायां मुद्रितः, विहारिनामसंवत्सरे आश्वियुजमासे १९५९ नवम्बरमासि प्रकटितः । (पूर्वशतकमात्र-मुपलभ्यते)

**पञ्चमग्रन्थः --**
श्रीरङ्गराजस्तवमु - पूर्वशतकमु, उत्तरशतकमु। पूर्वोत्तरशतकयोः परवस्तु गोविन्दाचार्यस्वामिविरचितप्रतिपदार्थतात्पर्यसहितः, विशाख-जिलायां देवाडग्रामे १९६९ संवत्सरे आन्ध्राक्षरेषु मुद्राप्य, श्रीवैष्णवस्तोत्रमालायां प्रकाशितः ॥

**षष्ठग्रन्थः --**

तिरुपतिक्षेत्रस्थानां वाचस्पति-साहित्यविशारदादिबिरुदभाजां भारत-राष्ट्रपतिपुरस्कारग्रहीतॄणां तत्रभवतां डा. N.C.V. नरसिंहाचार्याणां 'श्रीपराशरभट्टार्याणां महिमदर्पणम्' इति पत्रिकानिबन्धः ।

**सप्तमग्रन्थः --**

श्रीपराशरभट्टार्यरचनलु - ईयुण्णि वेङ्कटवीरराघवाचार्याणां निबन्धः, आन्ध्रभाषायां १९९२ संवत्सरे धनकुधरं वरदाचार्यैः संपादितायां श्रीरामानुजकीर्तिकौमुद्यां द्वादशभागे प्रकाशितः ।।

**अष्टमग्रन्थः --**

श्रीनम्बूरिकेशवाचार्यैः प्रणीतस्य 'आचार्यसूक्तिमुक्तावळी' नाम्ना आन्ध्रभाषायां प्रकाशितस्य गुरुपरम्पराप्रभावभूतस्य चम्पूकाव्यस्याधारेण च स्वीकृतः ।

अन्येषां प्राचीनार्वाचीनश्रीवैष्णवपत्रिकाणां, पण्डितानां च सहकारेण इमे सप्तप्राकाराः देवदेवोत्तमाय श्रीरङ्गनाथाय समर्पिताः'।।

## प्रथमप्राकारविशेषाः ।।

श्रीपराशरभट्टार्यैः विरचितस्य श्रीरङ्गराजस्तवस्याध्ययने सप्तप्राकारनिर्माणम् अत्यावश्यकमुचितं च भवेदिति कृत्वा सप्तप्राकाराः (अध्यायाः) विनिर्मिताः । तत्र प्रथमप्राकारे श्रियःपतेः चिदचिद्विशिष्टस्य कल्याणगुणगणकीर्तनमेव निखिलवेदपुराणादिषु प्रतिपादितम्, तद्वत् अल्पमेधसां संसारचक्रबंभ्रम्यमाणानां जनानामत्यन्तोपकाराय ज्ञानिनं-स्तत्त्वदर्शिनः भगवतो नारायणस्य तत्त्वं स्तोत्ररूपेण सुलभमार्गेणानु-जग्रुः । भगवान्

'स्तव्यः स्तवः प्रियः स्तोत्रं स्तुतिः स्तोतारणप्रियः ।'

इति श्रीविष्णुसहस्रनामस्तोत्रे प्रतिपादितम् । अतो मुमुक्षुजनेभ्यो गोविन्दभजनमेव विहितमासीत् । स्तोत्रपाठः सर्वजनसुलभो भवति । स्तोत्रपाठाः आबालवृद्धं जात्यादिनियमं विना तत्तद्देशीयासु भाषास्वपि उच्चार्यमाणाः भक्तिमार्गेण मोक्षपदवीमचिरेणैव कालेन प्रापयन्ति । तत्रापि विष्णोस्तत्त्वं वैष्णवं भक्तिसाम्राज्ये विशिष्टं स्थानं भजत इति सर्वविदितमेव । भक्तिसाहित्यसाम्राज्यविस्तरणे श्रीरामानुजीयं मतं विशिष्टाद्वैतसिद्धान्तं नितरां जगति प्रसिद्धम् इति प्रतिपादितम् । एवमेव

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।।' (भ.गी. ४-७)

इति गीतायामुक्तप्रकारेण धर्मसंरक्षणार्थं ज्ञानिरूपेण भगवान् नारायणः आत्मानं सृजत इति,

'लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ।।'

इति श्रीवैष्णवगुरुपरम्परा विजयतेतराम् इति दिव्या ह्येषा गुरुपरम्परा निखिलचेतनजनोज्जीवनाय नानाप्रकारैः भगवन्नामप्रचारं कृतवतीति, अस्यां परम्परायाम् अनेके भागवतोत्तमाः स्वजीवितानि तृणाय मत्वा

बहुप्रयासमूढ्वा भगवद्गुणाविष्करणरूपान् ग्रन्थान् विरचयामासुरिति, तेषु श्रीरामानुजार्याणाम् अन्तेवासी श्रीकूरेशमिश्राः प्रसिद्धाः इति, एतेषां श्रीकूरेशमिश्राणां प्रियतनूजाः श्रीपराशरभट्टपादाः सर्वोत्कर्षेण जयन्तीति प्रतिपादितम् । श्रीपराशराः श्रीरङ्गराजदिव्यप्रसादमहिम्ना सञ्जाताः, श्रियःपतिना श्रीरङ्गनाथेनैव पुत्रकृतकीकृताः दिगन्तयशोविशालाः । कुमतिमतनिरसनसहस्रमरीचिमालिनः भूत्वा भूलोकवैकुण्ठस्य श्रीरङ्गमहाक्षेत्रस्य पुरोहिताः समभवन्नित्यपि च न्यरूपि । तत्र क्रमशः श्रीपराशरार्याणां बाल्योदन्तशीर्षिकायां श्रीकूरेशआण्डाल्दम्पतीनां वैराग्यजीवनवृत्तान्तः, तयोः श्रीरङ्गनाथेन स्वयं प्रसादप्रेषणम्, तस्य भक्षणेन श्रीकूरेशदम्पत्योः शिशुजननं, तस्मै शिशवे भगवद्रामानुजाचार्यैः पराशरभट्ट इति नामकरणं, गोविन्दभट्टार्याय तस्योज्जीवनायाज्ञाप्रदानं श्रीरङ्गदेवालये तस्य शिशोः निवासपरिकल्पनं च विवृतमासीत् । तदनु श्रीपराशराणां जन्मप्रकारः चर्चितः ।

'वैशाखमास्यनूराधायां जातं भट्टार्यदेशिकम् ।
गोविन्दयतिपादाब्जचञ्चरीकमहं भजे ।।' (नित्यानुसन्धानम्)

इति (तनियन्) श्लोकमाधारीकृत्य जन्मसमयः विरचितः । श्रीरामानुजाचार्याणां चरमे वयसि प्रादुर्भूता एते A.D. 1062, A.D. 1073-78 काले सञ्जाता इति, तत्र पण्डितानां विवादाश्चर्चिताः । श्रीपराशरार्याणां विद्याभ्यासकौशलं, सर्वज्ञपण्डिताहङ्कारखण्डनम्, भगवद्विषये परिप्रश्नाः, श्रीकूरेशवर्याणां समाधानं च विवृतमासीत् । भगवदाज्ञया श्रीपराशरार्याणां विवाहमहोत्सवः, तीर्थवासीपरिचयः, तीर्थवासिद्वारा वेदान्तिपरिचयः, श्रीरङ्गनाथकटाक्षात् श्रीरामानुजा-ज्ञया प्रतीच्यां दिशि माधावाचार्यनाम्ना वेदान्तिसमाख्यया च विराजमानानामप्रतिमविद्वद्वराणामद्वैतिपरिवृढानां विनयनम्, वेदान्तिने पञ्चसंस्कारंकरणम्, तस्य नञ्जीयरिति नामानुग्रहणम्, नञ्जीयर् महाशयानां परिप्रश्नाः, भट्टार्याणां समाधानानि च विवृतानि भवन्ति। श्रीपराशरेभ्यः किरातजनसपर्याः उपवर्णिताः । तदा भट्टार्यकृतकिरातजनानुग्रहश्च उपवर्णितः । तदनु श्रीरङ्गक्षेत्रविसर्जनं, श्रीपराशरार्याणां श्रीरङ्ग-

विरहावस्थाः, श्रीरङ्गपुनरागमनं, श्रीरङ्गक्षेत्रे श्रीवैष्णवदर्शननिर्वाहः, श्रीपराशरार्याणां श्रीसूक्तयः, पल्लवरायस्योपदेशः, भट्टार्याणां देवपूजाक्रमः, भागवतनिष्ठा, शिष्यवात्सल्यविषयः, भागवतकैङ्कर्य-निष्ठा, श्रीरङ्गे कैशिकद्वादश्यां पुराणपठनवृत्तान्तः, श्रीरङ्गनाथ-पुरस्कारः, श्रीरङ्गनाथेन ब्रह्मरथप्रेषणम्, तेन ब्रह्मरथेन मातुःसमीपागमनं, श्रीपराशरभट्टार्यैः श्रीरङ्गवासिनां जनानां पशुपक्षिकृमिकीटकादीनां च कृतज्ञतानिवेदनम्, श्रीपराशरार्याणां योगनिष्ठा तेषां पुण्यास्तमयश्च बहुग्रन्थपरिशीलनामुखेन उपवर्णितः। श्रीपराशरभट्टार्याणामनन्तरं श्रीरङ्गेशपुरोहितत्वं श्रीवेदव्यासभट्ट-पादेभ्यःप्रदानं च निरूपितम् । भगवद्रामानुजमुनीन्द्राणां चतुस्सप्तति-सिंहासनाधिपतिषु पराशरार्याणां स्थानं प्रदर्शितमासीत् । इत्थं प्रथम-प्राकारे श्रीपराशरार्याणां जीवनवृत्तान्तः, तद्ग्रन्थाधारेण महात्मनां मुखारविन्दाच्च उपलभ्यमानः यथामति प्रपञ्चितः ।।

## द्वितीयप्राकारविशेषाः ।।

अद्वितीये द्वितीये प्राकारे महाप्रतिभावतां श्रीपराशरभट्टार्याणां ग्रन्थानां परिचयः, सर्वतोमुखपाण्डित्यविश्लोषणम्, रचनापद्धतिः, रसाविष्कारः, तेषां श्रीपराशरभट्टार्याणां व्याख्याकैशलं च प्रत्यपादि। श्रीपराशरभट्टार्याणां मुक्तकानि, रसमयानि पठितृजनानां रुच्युत्पादकरूपाणि कानिचन प्रदर्शितानि।

अ. तत्र उपलभ्यमाना ग्रन्थाः –

१) अष्टश्लोकी, २) क्रियादीपः, ३) भगवद्गुणदर्पणम्,

४) श्रीगुणरत्नकोशः, ५) श्रीरङ्गनाथस्तोत्रम्,

६) श्रीरङ्गराजस्तवश्च

आ. अनुपलभ्यमानग्रन्थाः –

१) अध्यात्मखण्डद्वयविवरणम् २) तत्त्वरत्नाकरः

३) लक्ष्मीकल्याणनाटकं च ।

इ. द्रविडभाषायां तनियन्गाधाः, कैशिकपुराणस्य व्याख्या चेति यथामति परिचयः कृतः ।

## तृतीयप्राकारविशेषाः ।।

तृतीयप्राकारे वेदः, वेदस्वरूपं, वेदवेद्यत्वेन श्रीमन्नारायणस्य प्रस्तावः, द्रविडवेदस्वरूपं, द्रविडवेदविभागः, दिव्यसूरिणां परिचयः, तेषां प्रबन्धाः, द्रविडवेदसारांशः, विशिष्टाद्वैतम्, तत्त्वत्रयविषयः, त्रिगुणम्, कालस्वरूपम्, शुद्धसत्त्वम्, ईश्वरतत्त्वम्, हितस्वरूपम्, प्रपन्नजनलक्षणम्, श्रीशठारेः प्रपत्तिः, विशिष्टाद्वैतप्रचारे श्रीरामानुजाचार्याणामनुदानम्, श्रीपराशरभट्टपादेषु श्रीवैष्णवसिद्धान्तानां प्रभावः, श्रीरङ्गराजस्तव-परिचयश्च विपुलमुपवर्णिताः ।।

## चतुर्थप्राकारविशेषाः ।।

चतुर्थप्राकारे श्रीरङ्गम् - श्रीपराशरभट्टार्याणामनुभवरूपः, श्रीपराशरभट्टार्याणां जन्मस्थलम् - श्रीरङ्गमहाक्षेत्रम्, दिव्यसूरि-चरिते श्रीरङ्गमहाक्षेत्रवर्णनम्, ब्रह्माण्डपुराणे श्रीरङ्गक्षेत्रविवरणम्, स्कन्धपुराणे श्रीरङ्गक्षेत्रमहिमा, विश्वगुप्पादर्शचम्पूप्रबन्धे श्रीरङ्गक्षेत्र-वर्णनम्, श्रीरङ्गं प्रति द्वादश दिव्यसीरिणां प्रत्येकानुभवः, द्रविडगाथाः, गोदादेव्याः श्रीरङ्गानुभवः, यामुनार्याणां श्रीरङ्गानुभवः, भगवद्रामानुजाचार्याणां श्रीरङ्गानुभवः, वादिभीकरगुरूणां श्रीरङ्गानुभवः, श्रीपराशरभट्टार्याणां श्रीरङ्गानुभवः, श्रीपराशर-भट्टार्याणामनन्तरकालीनानां वेदान्ताचार्याणां श्रीरङ्गानुभवश्च तद्ग्रन्थसाहाय्येन संस्कृतान्ध्रद्रविडभाषामयैः श्लोकैः गाथाभिश्च उट्टङ्किताः ।

श्रीपराशरार्याः श्रीरङ्गवासरसिका अभवन् । अतः श्रीरङ्गविषये ये ये वैष्णवाचार्याः मङ्गळाशासनमकुर्वन् तेषां प्रभावः पराशरेषु प्रतिबिम्बित इति कृत्वा प्राकारेऽस्मिन् पूर्वोक्तानां विशेषाणां परिचर्चा समुपकल्पिताः ।

## पञ्चममहाप्राकारविशेषाः ॥

पञ्चममहाप्राकारे श्रीरङ्गानुभवजनितविशेषसंस्कारबलेन उभयवेदान्ताचार्यकटाक्षेण श्रीविशिष्टाद्वैतसिद्धान्तविजयध्वजस्थापनाय विमलहृद्यानवद्यकवितामाधुर्येण द्वयमन्त्रविवरणाय प्रवृत्तस्य श्रीपराशर-भट्टार्यविरचितश्रीरङ्गराजस्तवस्य पूर्वशतकस्य समीक्षणं क्रमेण परिचर्चितमासीत् । पूर्वशतके अनेकेऽपूर्वविषयाः सन्ति । तत्रादौ आचार्यमहिमा, श्रीवैष्णवगुरुपरम्परावाक्यानि, श्रीपराशरार्यैः कृतः पितृस्तवः, गोविन्दमिश्राणां स्तवः, भगवद्रामानुजस्तवः, महापूर्ण-गुरोस्स्तवः, यामुनमहागुरोस्स्तवः, नाथमुनीनां स्तवः, श्रीशठारेः स्तवः, श्रीविष्वक्सेनस्तवः, श्रीस्तवः, मन्त्ररत्नपूर्वखण्डविवरणम्, श्रीरङ्ग-कैङ्कर्यप्रार्थना, पञ्चायुधानामुत्प्रेक्षा, पराशरभट्टार्याणां श्रीरङ्गराज-स्तवनाधिकारः, तेषां विनयप्रकटनम्, कावेर्यास्तवः, कावेरीद्वीपस्तवः, श्रीरङ्गारामभूमेः स्तवः, श्रीरङ्गदिव्यविमानस्तवः, श्रीरङ्गनगरपरि-पालकानां कुमुदादीनां स्तवः, श्रीरङ्गमन्दिरस्तवः, श्रीपरकालकवेः स्तवः, द्वारचतुष्टयाधिकारिणां स्तवः, चन्द्रपुष्करिणीस्तवः, श्रीरङ्ग-विमानस्तवः, विमानान्तरोत्तरभागगोपुरशिखरोपरिविराजमाननृसिंहदेव-स्तुतिः, श्रीभाष्यकारनित्यानुष्ठानपद्धत्यनुगुणगुरुपरम्परासेवास्तवः, चन्द्रपुष्करिणीतीरप्ररूढपुन्नागानोकहश्रेष्ठस्तवः, श्रीमद्विष्वक्सेनस्तवः, गरुडस्तवः, अत्यन्तान्तरङ्गभूतपञ्चायुधस्तवः, दाशरथिप्रतिनिधि-श्रीरङ्गनाथसेवैकधारकयोः हनुमविभीषणयोः स्तवः, श्रीरङ्गराज-गर्भगृहद्वारप्रवेशवेत्रश्रेष्ठस्तवः, श्रीरङ्गविमानान्तःप्रदेशस्तवः, श्रीरङ्ग-शायिपादारविन्दसंवाहिनीस्तवः, चामरग्राहिणीस्तवः, नारपदविचारः, श्रीरङ्गनाथं रम्यजामात्रभिधानं शरणवरणम्, श्रीरङ्गनाथशय्यास्तवः, श्रीरङ्गनाथसौन्दर्यलावण्यशोभावर्णनम्, श्रीरङ्गनाथदिव्याभरण-वर्णनम्, श्रीरङ्गराजोत्तमाङ्गादिपादारविन्दपर्यन्तं किरीटादिनूपुरान्तं तद्दिव्याभरणैस्सह वर्णनम्, श्रीरङ्गराजस्तवपूर्वशतकसमापनेऽपूर्वः

मङ्गळश्लोकः, पूर्वशतकेन द्वयमन्त्रपूर्वखण्डोपबृंहणम्, विशिष्टाद्वैत-सिद्धान्तानुगुणमति विपुलतया परिचर्चितमासीत् ।।

## षष्ठमहाप्राकारे विशेषाः ।।

श्रीपराशरभट्टार्याः पूर्वशतकेन द्वयमन्त्रार्थविवरणं कुर्वन्तः श्रीमन्नारायणचरणौ शरणं प्रपद्ये इति पूर्वखण्डं पूर्वाचार्यनिर्वाहकानुसारं श्रीरङ्गराजं तुष्टुवुः । तदनु श्रीमन्तः पराशरभट्टपादाः उत्तरशतके स्वकीये श्रीरङ्गराजस्तवे श्रीमते नारायणाय नमः इति उत्तरखण्डवाक्यविवरणाय प्रारभमाणाः, ब्रह्मविदाप्नोति परम् इति सर्वस्मात् परस्यैव प्राप्यतया सर्वसमाश्रयणीयत्वनिमित्तकसौलभ्याति-शयजुषश्रीरङ्गराजस्यैव सर्वस्मात् परत्वं विस्तरेण प्रतिपादयिष्यन्तः सन्तः प्रथमतः शास्त्रैकसमधिगम्यत्वात् परतत्त्वस्य तादृशशास्त्र-प्रदानमपि अपारकृपावतो भगवतः कृत्यमिति उत्तरशतकं प्रारंभन्ते। अस्मिन् महाप्राकारे उत्तरशतकारम्भहेतुः प्रतिपादित आसीत् । तदनु वेदबाह्यमतविसर्जनम्, चार्वाकमतखण्डनम्, सुगतमतखण्डनम्, योगाचार-सौत्रान्तिक-वैभाषिकानां मतखण्डनम्, जैनमतनिरसनम्, वैशेषिक-नैयायिकयोः मतनिरसनम्, साङ्ख्ययोगपशुपतिमतानामीषदा-म्नायानुसरणम्, श्रीपाञ्चरात्रस्य सर्वथा श्रुत्यनुविधानं पञ्चमवेदादेव निश्चीयत इति कथनम्, वेदानां प्रमाणत्वकथनम्, वेदस्य भगवत्परतत्वे भगवद्गीतायाः वचनोदाहरणम्, कर्मणां विषये श्रीरङ्गपुरोहितानां दृढाभिप्रायः, सर्वकर्मसमाराध्यः नारायण एवेति कथनम्, अद्वितीयश्रुतेः विशिष्टाद्वैतार्थ एवेति कथनम्, नारायण-शब्दार्थविवरणम्, भगवतः ऐश्वर्यगुणस्वरूपम्, वीर्यगुणविवरणम् , तेजोगुणनिरूपणम्, सङ्कर्षणादिव्यूहत्रये तत्तत्कृत्यानुगुणौ द्वौ द्वौ गुणावेव पुरस्कृताविति कथनप्रकारः, चत्वारोऽवान्तरव्यूहा इति भगवच्छास्त्रमुखेन प्रतिपादनम्, नित्यानां चेतनानां सृष्टिः दयाकार्येति कथनम्, भगवतः निरङ्कुशस्वातन्त्र्यविषयः,बहुभवनं भगवतः

स्ववल्लभाया लक्ष्म्याः हृदयोल्लासायेति विवरणम्, धर्मव्यवस्थापनमेवावतारप्रयोजनमिति, भगवतः सर्वभूतसुहृत्त्वविवरणम्, विभवावतारप्रतिपादनम्, भगवतः अवताररहस्यज्ञानमज्ञानानामतिदुर्लभमिति कथनम्, विष्ण्वाख्यप्रथमावतारप्रभावः, भगवतः क्षीरसागरमथनार्थमवतारस्तवः, गजेन्द्रापन्निवर्तनार्थमवतीर्णावतारस्तवः, दशावतार-स्तवः, अर्चावतारसौलभ्यवर्णनम्, श्रीरङ्गनाथस्य गायत्रीमन्त्र-प्रतिपादकत्वम्, सूर्योपस्थानमन्त्राधिष्ठितः नारायण एवेति, ज्ञानयज्ञोपास्यः रङ्गनाथ एवेति, अमृतं देवानामायुः प्रजानामिति श्रुतेः समन्वयः, उदारस्सर्व एवैते इति गीताशास्त्रसमन्वयः, अन्तरात्मभूतभगवदुपासकानां वैभवम्, भगवानेव उपायः उपेयश्चेति कथनम्, सर्वदेशसर्वकालेषु सर्वविधकैङ्कर्यं वितीर्य रक्षेति कथनम्, शरणागत्युक्त्यधिकारपूर्तिः नास्तीति कथनम्, श्रीरङ्गनाथस्य दयाप्रवाहवैभवम्, श्रीरङ्गराजस्तवे उत्तरशतकसमापने मङ्गळश्लोकः, षष्ठे प्राकारे भगवतः श्रीरङ्गशायिनः पमानुग्रहेण निगमनम् चं चर्चिताः । सप्तमे प्राकारे सर्वप्राकारेषु चर्चिताः विषयाः पाठकजनसौलभ्याय नाममात्रेण प्रदर्शिताः ।

एवं प्रकारेण सप्तानां प्राकाराणां निर्माणावसरे सप्तगिरिनाथः दयाभरणभूयिष्ठः श्रियःपतिःमदीयकुलदैवतं परमानुग्रहं मदीयाचार्याणां सकाशात् अनुजग्राह। अन्ते श्रीश्रीनिवासदयाशतकनिर्माणकुशलानां श्रीवेदान्तदेशिकसार्वभौमानां कामं सन्तु मिथः करम्बितगुणा इति मङ्गळश्लोकमेव स्मरन् श्रीश्रीनिवासचरणारविन्दयोः त्रिकरणशुद्ध्या भक्त्या विनयेन च समर्पयामि । अज्ञानेन प्रमादेन च भ्रान्त्या वासामर्थ्येन वा कृताः रचनादोषाः दोषभोग्याः भागवताः क्षमध्वम् ।।

'श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः ।
श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ।।
कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरङ्गराजो जयतु श्रीरङ्गश्रीश्च वर्धताम् ।।'

श्रीमत्सुन्दरजामातृमुनिमानसवासिने ।
सर्वलोकनिवासाय श्रीनिवासाय मङ्गळम् ।।

हरिः ओम् तत् सत् ।

श्रीकृष्णार्पणमस्तु ।

एतत् सर्वम् श्रीलक्ष्मीवेङ्कटेश्वरपादारविन्दार्पणमस्तु ।।



## श्रीरङ्गराजस्तवसमीक्षात्मकमध्ययने उपयुक्तानां ग्रन्थानां सूची ।

संस्कृतग्रन्थाः --

१. अप्पय्यदीक्षिताः - कुवलायानन्दः , चौखाम्बाप्रेस्, वारणासि, १९६३.

२. अमरसिंहः - अमरकोशः, जयलक्ष्मीपब्लिकेषन्, म.न.शेषाचार्यः, १९८७. (श्रीविष्णुसहस्रनामभाष्यम्)-हैदराबाद्।

३. अण्णाङ्गराचार्याः - ( श्रीपराशराबट्टार्याणां व्याख्या), P.B. अण्णङ्गराचार्याः, भगद्गुणदर्पणम्, काञ्चीपुरम्. चेन्नै, १९६४ (व्याख्यातारः) श्रीवत्सवरदाचार्याणां तत्त्वसारेमायावादशेषणीप्रक्रमः, काञ्चिपूरम् चेन्नै,

४. - वेदान्तदेशिकस्तोत्रावळिः, ग्रन्थमालाक्रार्यालयम्, काञ्चिपुरम्, १९५८.

५. - वैदिकमनोहरा, ग्रन्थमालाकार्यालयम् काञ्चिपुरम्, १९५२.

६.- - संस्कृतेरामानुजनूत्तन्दादि, गन्थमालाकार्यालयम्- काञ्चिपुरम्, १९६४.

७. - द्वितीयसहस्रम्, ग्रन्तमालाकार्यालयम् - काञ्चिपुरम्, १९६४.

८. - श्रीभाष्यम् (मूलमात्रम्), Freedom press -Madras, १९७०.

९. - वेदान्तसारः वेदान्तदीपः,

१०. - अतिमानुषस्तवः, काञ्चिपुरम्, १९६६.

११. - सकलस्तोत्रजालम्, काञ्चिपुरम्, १९७१.

१२. - संस्कृतरामानुजनूत्तन्दादि, काञ्चिपुरम्, १९६४.

१३. - वेदार्थसंग्रहगीताभाष्यगद्यत्रयनित्यग्रन्थश्च, काञ्चिंपुरम्, १९६९.

१४. - मीमांसान्यायप्रकाशः, निर्णयसागर प्रेस्, मुम्बायि, १९४३.

१५. आनन्दवर्धनः - ध्वन्यालोकः, रामसास्त्रीपाटीव्याख्या, मोतीलाल् बनारसीदास् प्रेस्।

अप्पलाचार्याः, श्रीभाष्यम् - पातञ्जलमहाभाष्ये पस्पशाह्निकम्,
कृतप्रचारसभा - राजमेन्ड्री, १९६९.
कुमारताताचार्याः - श्रीमद्भागवतम्, वीरराघववाख्या।
कुमारताताचार्या अद्दंकिश्रीशैल - यामुनाचार्याणां चतुश्लोकी,
/enkatesam., स्तोत्ररत्नं च वेदान्ताचार्यभाष्यानुगतम् -
anda press - Madras.
काशिकापूर् - वेदचर्चाप्रस्तावः, T.T.D.Press.-Tirupati,
९२.
कालिदासः - रघुवंशः, T.T.D.press,- Tirupati, १९९२.
गरुडवाहनपण्डितः - दिव्यसूरिचरितम्, विद्वत्तरङ्गिणी मुद्राशाला,
र्, १८८५.
. A.v.गोपालाचार्याः - श्रीरङ्गराजस्तवः, Tiruchinapalli,
३४.
. गोपालकृष्णमाचार्याः, किळाम्बि - उपन्याससंग्रहः, . वैष्णवपत्रिका
दपाडु, १९२६.
. जगन्नाथः - रसगङ्गाधरः, चौकाम्बाविद्याभवन्, वारणासी,
७०.
.भगवद्रामानुजाचार्याः - शरणागतिगद्यम्, वैकुण्ठगद्यम्,
रङ्गगद्यम्, वेदान्तकारिकावलिः,- समुद्राल रङ्गरामानुजाचार्याः,
व्वूर्, - १९९४.
.- वेदार्थसंग्रहः गीताभाष्यञ्च, उभयवेदान्ताचार्यपीठम्,
डिगड्डपालेम्. १९६९
७. भवभूतिः - उत्तररामचरितम्, साहित्यअकाडमि, हैदराबादु, १९६५
८. देवराजगुरुः - वरवरमुनि दिनचर्या, चेन्नै, १९२२
९. नरिसिंहाचार्याः,N.C.V.- पराशरभट्टार्याणां महिदर्पणम्
निबन्धपत्राणि), तिरुपति।
०.नारसिंहाचार्याः, K.V.R. - श्रीगुणरत्नकोशः, उभयवेदान्तसभा,
न्टपाडु, १९८४.

३१. रामानुजताताचार्याः, A. - Vedic session paper II, T.T.D. Tirupati, १९९२.

३२. रामानुजताताचार्याः N.S. - " " "

३३. रघुनाथाचार्याः S.B. - Summaries of papers of Vedic seminor, T.T.D. Tirupati, १९९२.

३४. वेङ्कटाचार्याः - श्रीरङ्गराजस्तवः व्याख्यासमेतः, तिरुमडिशै १८७९.

३५. वाल्मीकिः - श्रीमद्रामायणम्, वाविल्लप्रेस्, चेन्नपुरि।

३६. विश्वनाथशास्त्री, शात्तनूर् - कार्तीकमाहात्म्यखण्डः, शास्त्ररञ्जनी मुद्राक्षरशाला, चेन्नपुरि, १९०८.

३७. वरवरमुनिः- यतिराजविंशतिः, T.T.D., Tirupati.

३८. वेङ्कटाध्वरिः - विश्वगुणादर्शचम्पूः, चौकम्बाविद्याभवन्, वारणासि, १९६३.

३९. वेदान्ताचार्याः - दयाशतकम्, T.T.D.Press, Tirupati.१९५६

४०. विजयराघवाचार्या,तट्टा - अष्टादशभेदसंग्रहः , अजस्रापत्रिका।

४१. शठगोपस्वामी, गोडवर्तिः - भगवद्रामानुजविजयः, G.S.सुन्दरराजन्, तणुकु, १९९३.

४२. सूर्यनारायणशास्त्री,पेरि - National conference, T.T.D., Tirupati, १९९२

४३. श्रीश्रीश्री त्रिदण्डि श्रीमन्नारायणरामानुजजिय्यरस्वामिपादाः - श्रीमद्भगवद्गीता, भगवद्रामानुजभाष्यम्, वेदान्ताचार्यविरचिततात्पर्यचन्द्रिका, वासुदासाश्रमः, नडिगड्डपालेम्, १९७६.

४४. श्रीरङ्गाचार्याः, तेन्मठम् - आचार्यसूक्तिरत्नमाला, गोपालकृष्ण-मुद्राक्षरशाला, चेन्नै, १९३७.

**आन्ध्रभाषाग्रन्थाः --**


१. अण्णङ्गराचार्याः, प्र.भ. - श्रीरामानुजपत्रिका, ग्रन्थमाला आफीस्, काञ्चीपुरम्, १९६१.

२. - स्तोत्ररत्नम्, ग्रन्थमाला आफीस्, काञ्चीपुरम्, १९७८.

३. अनन्ताळ्वान्स्वामी - गोदाचतुःशिलोकीव्याख्या, A.श्रीरङ्गनायकाचार्यः, पालकोल्लु, १९९३.

४. केशवाचार्यः, नम्बूरि - आचार्यसूक्तिमुक्तावळिः, जम्मिनम्माळ्वार् चारिटीस्, गुण्टूरु, १९७२.

५. गोपालाचार्याः, ते.कं - पुरुषसूक्तम् (आन्ध्रानुवादः), नडिगड्डपालेम्, १९६६.

६. - रामानुजदर्शनविशिष्टत सकलश्रुतिसमन्वयमु, नडिगड्डपालेम्, १९६७.

७. - पूर्वमीमांसादर्शनमु, वि.शि.प्रसङ्घः, नडिगड्डपालेम्,

८. - विशिष्टाद्वैतविशिष्टत, नडिगड्डपालेम्, १९९२.

९. - जीयर्जैत्रयात्रा, नडिगड्डपालेम्,

१०. - तिरुप्पावै, प्रथमद्वितीयभागौ, नडिगड्डपालेम्,

११. तम्मय्या सागङ्ग - वैजयन्तीविलासमुं, विजयवाडा, १९७१.

१२. नरसिंहचार्युलु, P.T.G.V.L. - ज्ञानसारमु, मचिलीपट्टणम्, १९८४.

१३. नरसिंहाचार्याः, आसूरि - रहस्यत्रयानुभूति, शारदाप्रेस्, विजयवाडा, १९४२.

१४. नरसिंहाचार्याः, K.T.L. - रत्नयुगली, नारदभक्तिसूत्रमुलु, श्रीगुणरत्नकोशमु, श्रीगोदाग्रन्थमाला, मुसुनूरु, १९७४.

१५. - शठकोपवाक्सुधा, श्रीगोदाग्रन्थमाला, मुसुनूरु, १९८०.

१६. - तत्त्वत्रयामृतमु, श्रीगोदाग्रन्थमाला, मुसुनूरु, १९८४.

१७. नरसिंहाचार्याः, के.श.वे.- गुरुपरम्परादि, कळ्ळकूर,

१८. (माधवसेट्टि, बैसानि,) - पेद्द नित्यानुसन्धानमु, मद्रास्सु, माधवसेट्टि चारिटीस्, १९८४.

१९. रामानुजाचार्याः, श्रीमत्तिरुमलै काण्डूर् - श्रीविशिष्टाद्वैतवैभवमु, चेन्नपुरी, १९३८.
२०. रामानुजाचार्याः, पेरम्बुदूर् - श्रीविष्णुसहस्रनाममु, आन्ध्रव्याख्या, मद्रास्, १९५२.
२१. रामानुजस्वामी, T.P. - श्रीवैष्णवाचारनिर्णयमुलु, वरूङ्गल्, १९७४.
२२. राघवय्य, तिरुवाय् पाटि - आळ्वारुल दिव्यवैभवमु, T.T.D. Tirupati, १९७६.
२३. राघवाचार्याः, मरङ्गण्टि - यतिराजस्तोत्रम्, नागार्जुनसागर्, १९९५.
२४. - अष्टोत्तरशतनामावळिः, आळ्वातुलतिरुनक्षत्रमङ्गळाशानमुलु, तिरुनाममुलु, नागार्जुनसागर्, १९८४.
२५. रामराजु, बि. - सकलजीवसञ्जीवनमु, T.T.D., Tirupati, १९८३.
२६. वरदाचार्याः, धनकुधरम् - श्रीरामानुजकीर्तिकौमुदी, लक्ष्मीपुरम्, गुण्टूरु, १९९२.
२७. विजयराघवाचार्याः, तट्टा - आन्ध्रवेदार्थसङ्ग्रहमु, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपति,
२८. विश्वनाथशास्त्री, शात्तनूर् - कार्तिकमाहात्म्यखण्डः, शास्त्ररञ्जनी मुद्राक्षरशाला, १९०८.
२९. वेदव्यासः, एक्किराल - श्रीरामानुजवैभवमु (१-२), Vedic University, Hyderabad, १९९७.
३०. चन्द्रमौलि, कल्लूरि - वेदमुलु, TTD, Tirupati,
३१. (वैष्णवपत्रिकाधिपतिः) - मतत्रयसूत्रभाष्यसारसङ्गर्हमु, पेण्टपाडु, १९२५.
३२. - चरमपर्वाधिकारसङ्ग्रहमु, पेण्टपाडु, १९२७.
३३. - श्रीमन्नारायणपारम्यमु, पेण्टपाडु, १९२७.
३४. - अचित्स्वरूपमु, पेण्टपाडु, १९२७.

३५. - धाटीपञ्चकमु, पेण्टपाडु, १९२७.
३६. शेषाचार्युलु, कन्दाडै - विलक्षणमोक्षाधिकारिनिर्णयः, वेदान्तमुद्राक्षरशाला, मद्रास्, १९२८.
३७. - श्रीमदान्ध्रश्रीभाष्यमु, वेदान्तमुद्राक्षरशाला, मद्रास्, १९२२.
३८. सुब्रह्मण्यशास्त्री, यनमन्द्र - वैदिकसाहित्यचरित्र, गीताप्रचारसमिति, कावलि, १९६९.
३९. त्रिदण्डि श्रीमन्नारायणरामानुजजीयर्स्वामिपादाः - अष्टश्लोकी टीकातात्पर्यमु, अर्तमूरु,

द्राविडग्रन्थाः --

१. अण्णङ्गराचार्याः - तिरुच्चन्दविरुत्तम्, काञ्चीपुरम्, १९६२.
२. - इयर्पा, (मुदल्तिरुवन्दादि - मून्राम्तिरुवन्दादि) नूतनसद्ग्रन्थप्रकाशनसभा, चेन्नै, १९६६-६७.
३. - इयर्पा, (नान्गाम्तिरुवन्दादि), ग्रन्थमाला, काञ्चीपुरम्,
४. - तिरुप्पावै (मुव्वायिरप्पडिव्याख्या), नूतनसद्ग्रन्थप्रचारसभा, चेन्नै, १९६७.
५. - पेरियाळ्वार्तिरुमोळि, काञ्चीपुरम्, १९६८.
६. - पेरुमाळ्तिरुमोळि, काञ्चीपुरम्, १९६८.
७. - तिरुप्पल्लाण्डु, पेरियाळ्वार्तिरुमोळि, काञ्चीपुरम्, १९६८.
८. - पेरियतिरुमोळि, रामानुजपत्रिका (१९०), काञ्चीपुरम्, १९६९.
९. - श्रीवचनभूषणम्, मद्रास्,
१०. चक्रपाणि अय्यङ्गार् - मुमुक्षुप्पडि, आनन्दश्रीनिकेतनम्, मद्रास्,
११. रामानुजस्वामी, चिलकपाटि - तनिश्लोकी, मद्रास्, १८९२.
१२. - अष्टादशरहस्यङ्गळ्, मद्रास्,
१३. नरसिंहाचार्याः, K.T.L. - तत्त्वत्रयव्याख्या, गोदाग्रन्थमाला, मुसुनूरु, १९८४.
१४. ब्रह्मतन्त्रस्वतन्त्रपरकालस्वामी - मुव्वायिरप्पडि, गुरुपरम्पराप्रभावम्, यतिराजवैभवम्, वेदान्तदेशिकवैभवप्रकाशिकास्तोत्रम्, सरस्वतीनिलय प्रेस्,

१५. - रामानुजाचार्याः, माडभूषि, तत्त्वदीपम्, मद्रास्,
१६. - तिरुवाय्मोळि, TTD, Tirupati, १९५०.
१७. वरदाचार्यस्वामी, K. - दिव्यदेशपाशुरकुरिप्पु, १९५९.
१८. श्रीनिवासाचार्याः, अप्पन्, - अष्टश्लोकी (मणिप्रवाळव्याख्यायुता), काञ्चीपुरम्, १९१३.
१९. श्रीवेङ्गकटाचार्यः, कोयिल् कम्दाडै - पेरियतिरुमोळि, सिंहाचलम्, १९४७, १९५०.

**हिन्दीग्रन्थाः --**

१. श्रीदेवयादवाद्री - भक्तिसिद्धाञ्जनम्, मञ्जुप्रकाशनम्, लकनोउ, १९९२.
२. सम्पत्कुमाराचार्यः, अक्कारक्कानि - श्रीरामानुजनूत्तन्दादि, उपदेशरत्तिनमाला, काञ्चीपुरम्, १९६४.

**आङ्ग्लग्रन्थाः --**

१. Veda the World Eternal, National Coference on Vedas ans Sastras, TTD, Tirupati, १९९२.
२. Padmanabhan, S. - Sri Parasara Bhatta : His Contribution to Visistadvaita, Visistadvaita Research Centre, Madras, १९९५.
३. रामानुजस्तोत्ररत्नावळी, An Antology on Bhagavad Ramanuja in commemoration of the 961 th Ramanuja Jayanti. १९७७.
४. Srirangam : Important Papers,
५. The Temple of Sriranganatha Swami at Srirangam,
६. History of Srirangam,
७. Description of the Temple,
८. Raghavan, C. - Visistadvaita, TTD, Tirupati,

**सहायकग्रन्थालयाः --**

१. श्रीविशिष्टाद्वैतसिद्धान्तग्रन्थालयः, मचिलीपट्टणम् ।

२. श्रीश्रीश्री त्रिदण्डि श्रीमन्नारायणरामानुजजीयर्स्वामिपादानां ग्रन्थालयः, सीतानगरम्, गुण्टूर् ।

३. कलाशालाग्रन्थालयः, APR. Jr. College, Nagarjunasagar.

४. तुलसीरामानुजकूटम्ग्रन्थालयः, राजमहेन्द्रपुरम् ।

५. श्रीअण्णङ्गराचार्यस्वामिपादानां ग्रन्थालयः, काञ्चीपुरम् ।

६. श्रीमरिङ्गण्टि लक्ष्मीनरसिंहाचार्याणां ग्रन्थालयः,

७. श्रीरङ्गम् देवस्थानग्रन्थालयः,

